


ISSN 2230-8962

# वेदविद्या
# VEDAVIDYĀ

अन्ताराष्ट्रियस्तरे मानिता, सन्दर्भिता, प्रवरसमीक्षिता च शोधपत्रिका
Internationally Recognized Refereed & Peer-reviewed Research Journal
विश्वविद्यालयानुदानायोगस्य 'केयर' सूच्यां भारतीयभाषाविभागे क्रमसंख्या - ९७
Indexed in UGC 'CARE' list; Indian Language SI. No. - 97

अङ्क : ३६
Vol. XXXVI

जुलाई - दिसम्बर २०२०
July - December 2020




सम्पादकः
प्रो.विरूपाक्ष वि.जड्डीपाल्
सचिवः




महर्षिसान्दीपनिराष्ट्रियवेदविद्याप्रतिष्ठानम्
(भारतसर्वकार-शिक्षामन्त्रालयाधीनम्)
वेदविद्यामार्गः, चिन्तामणगणेशः, पो.जवासिया, उज्जैन: 456006

## समीक्षा समिति

**प्रो. श्रीपाद सत्यनारायण मूर्ति**
सम्मानीय भारतीय राष्ट्रपति से पुरस्कृत विशिष्ट विद्वान् एवं
सेवानिवृत्त प्रोफेसर (व्याकरण),राष्ट्रीय संस्कृत विद्यापीठ, तिरुपति

**प्रो. प्रफुल्ल कुमार मिश्र**
माननीय कुलाधिपति, डॉ.राजेंद्र प्रसाद राष्ट्रीय कृषि विश्वविद्यालय, बिहार;
पूर्व निदेशक, राष्ट्रीय पाण्डुलिपि मिशन, नई दिल्ली; एवं सेवानिवृत्त प्रोफेसर (संस्कृत),
उत्कल विश्वविद्यालय, भुवनेश्वर, ओडिशा

**प्रो. ईश्वर भट्ट**
प्रोफेसर (ज्योतिष), राष्ट्रीय संस्कृत संस्थान, नई दिल्ली

**प्रो. एस. वि. रमण मूर्ति**
सेवानिवृत्त प्रोफेसर, राष्ट्रीय संस्कृत संस्थान, गुरुवायूर, केरल

**डॉ. नारायण पूजार**
एसोसिएट प्रोफेसर (द्वैतवेदान्त), राष्ट्रीय संस्कृत विद्यापीठ, तिरुपति

## सम्पादक मण्डल

**प्रो. विरूपाक्ष वि. जड्डीपाल्**
सचिव, महर्षि सान्दीपनि राष्ट्रीय वेदविद्या प्रतिष्ठान, उज्जैन

**प्रो. केदारनारायण जोशी**
सम्माननीय भारत राष्ट्रपति द्वारा पुरस्कृत विशिष्ठ विद्वान् एवं
सेवानिवृत्त प्रोफेसर (संस्कृत), विक्रम विश्वविद्यालय, उज्जैन

**आचार्य (डॉ.) सदानन्द त्रिपाठी**
शासकीय संस्कृत महाविद्यालय, उज्जैन

**आचार्य श्री श्रीधर अडि**
अथर्ववेद के मूर्धन्य विद्वान् एवं प्रख्यात वेदपाठी, गोकर्ण

**प्रो. चक्रवर्ति राघवन**
प्रोफेसर (विशिष्टाद्वैतवेदान्त), राष्ट्रीय संस्कृत विद्यापीठ, तिरुपति

**डॉ. दयाशंकर तिवारी**
एसोसिएट प्रोफेसर (संस्कृत), दिल्ली विश्वविद्यालय, दिल्ली

**डॉ. अनूप मिश्र,**
डीडीओ, महर्षि सान्दीपनि राष्ट्रीय वेदविद्या प्रतिष्ठान, उज्जैन

# विषयानुक्रमणिका

## हिन्दी-सम्भाग



## English Section

# सम्पादकीयम्

1987 ईसवीय-वर्षस्य जनवरीमासे 1860 सोसाइटी-पञ्जीकरणाधिनियमान्तर्गततया राष्ट्रियवेदविद्याप्रतिष्ठानस्य स्थापनां भारतसर्वकारस्य मानवसंसाधनविकासमन्त्रालयीयोच्च-शिक्षाविभागः स्वायत्तशासिसंस्थारूपेण नवदेहल्याम् अकरोत्। तदनु भगवतः श्रीकृष्णस्य गुरोः वेदविद्याशास्त्रकलावारिधेः महर्षेः सान्दीपनेः विद्यागुरुकुलधाम्नि उज्जयिनीनाम्नि नगरे 1993 वर्षे स्थानान्तरितं प्रतिष्ठानं महर्षिसान्दीपनिराष्ट्रियवेदविद्याप्रतिष्ठानमिति नाम्ना विश्वेऽस्मिन् भारत-केन्द्रसर्वकारस्य वेदशिक्षणनीतेः मुखत्वेन विराजते।

महर्षिसान्दीपनिराष्ट्रियवेदविद्याप्रतिष्ठानं महासभायाः, शासिपरिषदः, वित्तसमितेः च प्राधिकारेण, अनुदानसमितेः, परियोजनासमितेः, परीक्षासमितेः, शिक्षासमितेः च मार्गदर्शने तानि तानि उद्दिष्टानि कार्याणि साधयति। भारतसर्वकारस्य माननीयाः शिक्षामन्त्रिणः योजनानिर्णेत्र्याः महासभायाः सभापतयः, कार्यकारिण्याः शासिपरिषदश्च अध्यक्षाः विद्यन्ते। माननीयाः मनोनीताः उपाध्याक्षाः वित्तसमितेः, अनुदानसमितेः, परियोजनासमितेः च अध्यक्षाः विलसन्ति। शिक्षामन्त्रालयस्य प्रशासनदक्षाः अधिकारिणः सर्वे प्रतिष्ठानस्य साहाय्यम् आचरन्ति इति श्रुतिपरम्परा-रक्षण-विकास-संवर्धन-निष्ठानां नः अहो भाग्यम्।

अस्य प्रतिष्ठानस्य स्थापनायाः द्वादश उद्देश्यानि वर्तन्ते । तानि यथा-

1. वेदाध्ययनस्य श्रुतिपरम्परायाः संरक्षणं, संवर्धनं, विकासश्च वर्तते। एतदर्थं प्रतिष्ठानं नाना-क्रियाकलापान् आयोजयेत्। उद्दिष्टाः ते क्रियाकलापाः सन्ति-पारम्परिकाणां वेदसंस्थानानां वेदपाठिनां, विदुषां च कृते साहाय्याचरणम्, अध्येतृवृत्त्यादिप्रदानं दृश्यश्रव्याभिलेखव्यवस्था च इत्यादयः।
2. वेदपाठिनां, वेदपण्डितानां, वेदविदुषां, वटूनां च निरन्तरं वेदाध्ययनेन वेदस्वरपरम्परायाः सस्वरवेदपाठपरम्परायाश्च सततं संवर्धनम्।
3. कृतवेदाध्ययनानां बद्धश्रद्धानां वेदविद्यार्थिनां प्रवृत्तये वेदविषयकोच्चतरशोधकार्ये प्रोत्साहनं, तादृशानां वेदविद्यार्थिनां शोधकार्यप्रवृत्तेः सुनिश्चयतासम्पादनं च ।
4. वेदार्थज्ञानवतां विद्यार्थिनां वेदेषु शोधकार्याय सर्वसौविध्यप्रदानम्, वैज्ञानिकदृष्टेः विश्लेषणात्मकदृष्टेः च व्युत्पादनं, येन वेदेषु निहितम् आधुनिकं वैज्ञानिकं ज्ञानं यथा-गणितम्, खगोलशास्त्रम्, ऋतुविज्ञानम्, रसायनशास्त्रम्, द्रवगतिविज्ञानम् चेत्यादि

यदस्ति-तत् आधुनिकविज्ञानेन प्रौद्योगिक्या च सह सम्बद्ध्येत येन वेदविदुषां वेदपण्डितानां च आधुनिकविद्वद्भिः सह विद्या-सम्बन्धस्य स्थापनं भवेत्।

5. सर्वत्र भारते वेदपाठशालानाम् / अनुसन्धानकेन्द्राणां संस्थापनं, अधिग्रहणम्, प्रबन्धनम्, पर्यवेक्षणं वा सोसाइटी-उद्देश्यमनु तेषां सञ्चालनं, प्रबन्धनं वा भवेत् ।
6. असम्यक्-सञ्चालितानां, नाशप्रायणां वा मूलनिधीनां न्यासानां च पुनः उज्जीवनं सम्यक्-प्रशासनं च।
7. विलुप्तप्रायाणां वेदशाखानां पुनः उज्जीवनं विशिष्टं लक्ष्यम्, तथा तासां वेदशाखानां पुनः उज्जीवनाय मानवकोषाणाम् (वेदविदुषां वेदपण्डितानां वटूनां वा) अभिज्ञानं तथा तासांविलुप्तप्रायाणांवेदशाखानां विषयेनिपुणानां वेदपण्डितानां नाम्नां विस्तृतसूचीनिर्माणम्।
8. भारते विद्यमानानां नानाप्रदेशानां, संस्थानानां, मठानां च विशिष्टायाः वेदस्वर-परम्परायाः, वेदाध्ययनस्य श्रुतिपरम्परायाः, सस्वरपाठपरम्परायाः चअद्यतनस्थितेः निर्धारणम्।
9. नानावेदशाखानां श्रुतिपरम्परायाः ग्रन्थसामग्रीणां, मुद्रितानां ग्रन्थानां, पाण्डुलिपीनां, ग्रन्थानां, भाष्याणां, व्याख्यानानां च विषये सूचनानां सङ्ग्रहणम्।
10. भारते वेदाध्ययनस्य वेदस्वरपरम्परायाः सस्वरवेदपाठपरम्परायाः चदृश्य-श्रव्याभिलेखनस्य अद्यतनस्थितेः विषये सूचनानां संग्रहणम् ।
11. वेदावधेः सर्वाद्यकालतः अद्य यावत् वेदेषु वेदवाङ्मये च निहितस्य ज्ञानस्य, विज्ञानस्य, कृषेः, प्रौद्योगिक्याः, दर्शनस्य, भाषाविज्ञानस्य, वेदपरम्परायाः च समुन्नतये अनुसन्धानस्य प्रवर्तनम्, तथा ग्रन्थालयस्य, अनुसन्धानोपकरणस्य, अनुसन्धानसौविध्यस्य, साहाय्यकारि-कर्मचारिणां, प्रविध्यभिज्ञायाः मानवशक्तेः च प्रदानम्।
12. सोसाइटी-स्मरणिकाम् अनुसृत्य प्रतिष्ठानस्य सर्वेषाम् अथवा केषाञ्चन उद्देश्यानां पूर्तये आवश्यकानां, सर्वेषाम् अथवा केषांचनसाहाय्यानाम्, आनुषङ्गिकाणां, प्रासङ्गिकानांवा कार्यकलापानां निर्वहणम् इति।

एतेषाम् उद्देश्यानां सम्पूर्तये स्थापनामनु काले काले नानाकार्यकलापान् प्रतिष्ठानम् अन्वतिष्ठत्, अनुतिष्ठति च । तस्मादेव वेदस्वरपरम्परायाः सस्वरवेदपाठपरम्परायाः च सततं संवर्धनार्थं भारतस्य षड्विंशत्यां राज्येषु विद्यमानानां शतशः वेदपाठशालानां

वेदगुरुशिष्यपरम्पराणां च वित्तानुदानम्, वर्धिष्णूनां सहस्रशः वेदवटूनां भोजनावासाद्यर्थं छात्रवृत्तिप्रदानं, नानावेदसम्मेलनानां नानावेदसंगोष्ठीनां च निर्वहणम्, आहिताग्नीनां, वयोवृद्धवेदपाठिनां साहाय्यम्, विलुप्तप्रायायाः ऋग्वेदशाङ्खायनशाखायाः पुनः उज्जीवनम्, नानावेदशाखा-ग्रन्थानां, अनुसन्धानोपकरणानां, अनुसन्धानात्मकग्रन्थानां च मुद्रणम्, सस्वरवेदपाठ-परम्परायाः दृश्यश्रव्याभिलेखनं, वैदिकग्रन्थालयस्य स्थापनम्, आदर्शवेद-विद्यालयस्य स्थापनम् इत्यादीनि कार्याणि 33 वर्षेषु प्रतिष्ठानम् अन्वतिष्ठत्।

यज्ञसामग्रीप्रदर्शनी, वेदविज्ञानप्रदर्शनी, वेदप्रशिक्षणकेन्द्रम्, वेदानुसन्धानकेन्द्रम्, एतदङ्गतया वेदपाण्डुलिपिग्रन्थालयः इत्यादीनि कार्याणि सम्प्रति प्रतिष्ठानस्य प्राधिकारिसमित्या अनुमतानि सन्ति।

बद्धश्रद्धानां वेदविद्यार्थिनां वेदविषयकोच्चतरशोधकार्ये प्रोत्साहनं, वेदशोधकार्य-प्रवृत्तेः सुनिश्चितितासम्पादनं, वेदविद्यार्थिषुवैज्ञानिकदृष्टेः विश्लेषणात्मकदृष्टेः च व्युत्पादनेनवेदेषु निहितस्य वैज्ञानिकज्ञानशेवधेः यथा-पर्यावरणविज्ञानस्य, जलवायु-परिवर्तनविज्ञानस्य, गणितस्य, खगोलशास्त्रस्य, ऋतुविज्ञानस्य, रसायनशास्त्रस्य, द्रवगतिविज्ञानस्य च आधुनिकविज्ञानेन प्रौद्योगिक्या च सह सम्यक् सम्बन्धेन आधुनिकानां नवीनानां च नानाज्ञानशाखानां संवर्धनं स्यादिति प्रतिष्ठानं भावयति।

अत एव वेदेषु निहितस्य ज्ञानविज्ञानशेवधेः सर्वत्र प्रकाशनाय प्रसाराय च षाण्मासिक्याः "वेदविद्या"-नाम्न्याः महितायाः अनुसन्धानपत्रिकायाः प्रकाशनं प्रतिष्ठानं कुरुते। तत्र वेदपण्डितानां, वेदपाठिनां वेदशोधकार्यप्रवृत्तानां मूर्धन्यानां मनीषिणां-विदुषीणां च प्रतिभाकुञ्जप्रसूतान् नानाशोधलेखान् प्रकाशयति प्रतिष्ठानं, वेदज्ञानं वितरति, आधुनिकविद्वद्भिः सह सारस्वतं सम्बन्धं च स्थापयति।

तत्र अनुसन्धानपत्रिकायाः प्रकाशनक्रमे वेदविद्यायाः षड्त्रिंशः (36) अङ्कः एषः भवतां हस्तमुपगतः इति प्रसन्नं चेतः। अत्र हि वेदविद्यायाः संस्कृत-सम्भागे, 'मानवाधिकारस्य वेदानुमोदितत्वम्' इति लेखे डॉ. सुन्दरनारायणझामहोदयः भारतसंविधानस्य विविधानुच्छेदेषु उल्लिखितान् मानावाधिकारसंबद्धान् विचारान् विमृश्य वेदे उल्लिखितस्य मानवाधिकारस्य तात्पर्यं सुष्ठु संगृह्णाति। 'वैदिकवाङ्मये यमः' इति लेखे डॉ. शत्रुघ्नपाणिग्राही ऋग्वेदादिषु सूक्ष्मतया प्रस्तुतं यमदेवताविषयकं चिन्तनं प्रस्तौति। 'वैदिकच्छन्दश्शास्त्रोपक्रमः' इति लेखे कविवरः डॉ. एम.जि.नन्दनरावमहोदयः हलायुधभट्टोल्लिखितकोष्ठकप्रदर्शनपूर्वकं आर्षच्छन्दसां स्वरूपं समुल्लिखति। 'वेदाङ्गेषु

ज्योतिर्विज्ञानम्' इति लेखे डॉ. ब्रजमोहनः वेदे सूक्ष्मतः उपलभ्यमानानां ज्योतिश्शास्त्रीयतत्त्वानां विवेचनं प्रस्तौति। 'यज्ञे मन्त्रविनियोगान्तर्गततया विचारः' इति लेखे डॉ. शम्भुनाथमण्डलमहोदयः अर्थभावप्रतीकान् मन्त्रविनियोगनिर्णये आधारत्वेन निर्दिशति। 'वैदिकवाङ्मये पर्यावरणचिन्तनम्' इति लेखे डॉ. मनुदेवबन्धुः वेदेषुल्लिखितस्य पर्यावरमचिन्तनस्य सूत्राणि आकलयति। 'वेदेषु निरिदिष्टाः पर्यावरणस्य संरक्षणोपायाः' इति लेखे डॉ. सत्यव्रतनन्दः वेदानुमोदितान् पर्यावरणसंरक्षणोपायान् दर्शयति। 'वेदेषु आयुर्विज्ञानम्' इति लेखे डॉ. रमेशकुमारझामहोदयः आयुर्वेदस्य अष्टाङ्गानि उल्लिख्य वेदेषु बीजरूपम् आयुर्वैद्यम् आकलयति। 'वेदेषु शास्त्रान्तरेषु च प्रणिविज्ञानम्' इति लेखे डॉ. सोमनाथदाशमहोदयः वेदेषु शास्त्रान्तरेषु च दृष्टं सर्वं प्राणिविज्ञानं सप्रमाणं सविस्तरं दर्शयति। 'महाभारतमहाकाव्ये वेदस्य प्रभावः' इति लेखे अनामिकादासमहोदया वेदे निहितस्य ज्ञानस्य प्रसारार्थं महाभारतस्य प्रणयनं तस्मात् महाभारते वेदस्य प्रभाव इति च सप्रमाणं दर्शयति।

ततश्च हिन्दी-विभागे, 'वैदिक गणित- आधुनिक भारत के लिए प्राचीन ज्ञान की आवश्यकता पर चिन्तन' इति लेखे प्रो निरंजन कुमार महोदयः भारतसर्वकारस्य राष्ट्रियशिक्षणनीतेः दृष्टौ वैदिक गणितस्य आवश्यकतां, ततश्च वेदस्य चिन्तनस्य अद्यत्वे प्रासङ्गिकतां च द्रढयति। 'वैदिक साहित्य में कृषि विज्ञान- एक दृष्टि' नामके लेखे डॉ. बबीताशर्ममहोदया वेदवाङ्मये कृषिमधिकृत्य प्राप्तानि विविधज्ञानानि-धान्यविषये, जलविषये, कृषिसंरक्षणविषये च प्रतिपादयति। । 'वेदों में प्रतिपादित वृक्ष-वनस्पतियों का सामाजिक एवं वैज्ञानिक महत्त्व' इति लेखे सुनीलकुमारः वृक्षाणां वनस्पतीनां च विषये वैज्ञानिकं महत्त्वं-कथ समाजाय उपयोगिन्यः ता वनस्पतयः इति प्रतिपादयति। 'वैदिक वाङ्मय में शरीर की अवधारणा' इति लेखे डा. मेघराजमीणामहोदयः वेदेषु उपनिषत्सु च प्राप्तं नाना अङ्गानाम् उल्लेखान् प्रमाणपुरस्सरं निर्दिश्य वेदविदाम् ऋषीणां दिव्यं ज्ञानं सोपबृंहणं प्रादर्शयत्।

ततः परम् आङ्ग्ल-भागे, 'Aravinda: A modern Sage (Rsi and Muni)' इति लेखे आचार्यः गणेश-उमाकान्तथिटेमहोदयः अरवैदिकं चिन्तनं समुपस्थापयति। 'Some Medicinal Plants Mentioned in the Vedas: A Religious and Cultural Observation' इति लेखे डॉ. अरुणकुमारशर्मा-डॉ.

रश्मी-देवी च बिल्व-खदिरोदुम्बर-पलाश-न्यग्रोध-अश्वत्थाम्रादीनाम् ओषधिवनस्पतीनाम् उपयोगं वर्णयतः।

एतेषां शोधलेखानां परिशीलनेन इदं स्पष्टं भवति यदिमे वेदविदुषाम् अनुसन्धानतत्त्वसुरभिता निबन्धाः वेदमूलां ज्ञानविज्ञानचिन्तनधारां सम्यक् प्रकाशयन्ति, आधुनिकज्ञानेन सह संबद्धं वेदे निहितं गूढं ज्ञानम् आविष्कुर्वन्ति । अत एव इमे शोधलेखाः सामान्यजनमानसे वेदं प्रति गौरवबुद्धिं विशेषतः द्रढयन्ति, विदुषां चिन्तनानि दिक्षु विदिक्षु च नयन्ति, लोकानां च कृते वेदे निहितं ज्ञानराशिं निदर्शयन्ति। ईदृशान् ज्ञानविज्ञानानुसन्धानपरान् लेखान् प्रकाशनाय प्रहितवतः विदुषः विदुषींश्च भृशम् अभिनन्दामि।अन्ये अपि विद्वांसः विदुष्यश्च भविष्यति काले लेखान् विरचय्य प्रेषयन्तु, अन्यान् शिष्यप्रशिष्यान् च प्रेरयन्तु इति च प्रार्थना।

एतेषाम् अनुसन्धानलेखानां संस्कारे, सम्पादने च सम्पादनमण्डलस्य विद्वत्परामर्शकाणां विदुषां साहाय्यं काले काले संप्राप्तम् अस्ति। अतः तेभ्यः सर्वेभ्यः महानुभावेभ्यः हार्दान् धन्यवादान् वितनोमि।

अस्मिन् सम्पुटे योजितानाम् अनुसन्धानलेखानां मुद्राक्षरयोजने, मुद्रणसंस्कारे, ग्रन्थकलेवरनिर्माणे च साहाय्यं कृतवतः सर्वान् मम साहाय्यान् प्रति उत्साहवर्धकान् धन्यवादान् वितनोमि।

**प्रो. विरूपाक्ष वि. जड्डीपाल्**

सचिवः

महर्षिसान्दीपनिराष्ट्रियवेदविद्याप्रतिष्ठानम्,

(शिक्षामन्त्रालयः, भारतसर्वकारः)

वेदविद्यामार्गः, चिन्तामणगणेशः, उज्जैनः

अङ्क- ३६
जुलाई - दिसम्बर २०२०

**वेदविद्या**
ISSN-२२३०-८९६२
UGC 'CARE' list Ind. Lang. Sl.No. 97

# मानवाधिकारमूल्यस्य वेदानुमोदित्वम्

**विद्यावाचस्पतिः डॉ. सुन्दरनारायणझाः**

**भूमिका**

**यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व तद्ब्रह्म।**[१] इत्यनया श्रुत्या जगत्कारणत्वं ब्रह्मलक्षणमुक्तम्। तत्रापि प्राधान्येन जगदुत्पत्तिस्थितिलयनिमित्तोपादानब्रह्मप्रतिपादनं विहितम्। सृष्ट्यादावखिलाण्डकोटिब्रह्माण्डनायको भगवान् नारायणः स्वोदरस्थिताञ्जीवानुद्धर्तुं प्रकृतेः सकाशाद् रजोगुणं गृहीत्वा चतुर्मुखं ब्रह्माणमसृजत्। तदुक्तम् -

**ससर्ज भगवानादौ त्रीन् गुणान् प्रकृतेः परः।**
**महत्तत्त्वं ततो विष्णुः सृष्टवान् ब्रह्मणस्तनुम्॥**[२]

स परमात्मा नानाविधाः प्रजाः सिसृक्षुरभिध्यायापो जायन्तामित्यभिध्यानमात्रेणाप एव ससर्जेत्याह मनुः। तास्वप्सु बीजं शक्तिरूपमारोपितवान्। तद्बीजं परमेश्वरेच्छया हैममण्डमभवत्। यथा -

**सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः।**
**अप एव ससर्जादौ तासु वीजमवासृजत्॥**

**तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।**
**तस्मिञ्जज्ञेस्वयं ब्रह्मा सर्वलोकपितामहः॥**[३]

अमुमेव हिरण्मयाण्डादुद्भूतं सर्वलोकपितामहं ब्रह्माणमभिलक्ष्य श्रुतिराह -

**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥**[४]

---

१ तै.उप. ३.१

२ मणिमञ्जर्याम् १.२

३ मनुस्मृति १.८, ९

४ ऋग्वेदः १०.१२१.१

भगवतो नारायणस्य सृष्टियज्ञात्मके कर्मणि सर्वप्रथमं स्वत एवोद्भूतोऽयं ब्रह्मा स्वयम्भूरित्युक्तः। स्वयम्भूः सकाशाज्जातो मनुः स्वायम्भुवेति प्रोक्तः। मन्-ज्ञाने धातोः **शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च**[५] इत्युणादिसूत्रेण उ-प्रत्यये कृते सति मनुरिति शब्दो निष्पद्यते। मनुर्विषये श्रुतावेवमुक्तं यत्- **ये विद्वांसस्ते मनव**[६] इति ।

ब्रह्मपुत्रस्यास्य स्वायम्भुवमनोः षड्वंशप्रभवा अन्ये समानकार्यकारिणः स्वस्वकाले सृष्टिपालनादावधिकृताः स्वाः स्वाः प्रजा उत्पाद्य पालितवन्तः। ते यथा -

**स्वारोचिषश्चमात्तमश्च तामसो रैवतस्तथा।**
**चाक्षुषश्च महातेजा विवस्वत्सुत एव च॥**

**स्वायम्भुवाद्या सप्तैते मनवो भूरितेजसः।**
**स्वे स्वेऽन्तरे सर्वमिदमुत्पाद्यमापुश्चराचरम्॥**[७]

तस्य मनोरपत्यं पुमान् (मनु+अणु) मानवः, स्त्री च मानवी। मानव इति शब्दस्यानेके पर्यायाः सन्ति। यथा -

**मनुष्या मानुषा मर्त्या मनुजा मानवा नराः।**
**स्युः पुमांसः पञ्चजनाः पुरुषाः पुरुषा नरः॥**[८]

मनोरपत्यमित्यर्थे **मनोर्जातावञ्यतौ युक् च**[९] इत्यनेन सूत्रेण यत्प्रत्ययः षुमागमश्च मनोरित्याहुर्वैयाकरणाः। अत्र जातिश्च प्रत्ययान्तोपाधिः। मनोरपत्यं जातिश्चेदिति अपत्यमात्र-विवक्षाया- मन्तरेण जातिं मानव इति भवति। **मत्वा कर्माणि सीव्यन्ति। मनस्यमानेन सृष्टाः। मनस्यतिः पुनर्मनस्वीभावे। मनोरपत्यं मनुषो वा**[१०] इति यास्कः। मैत्रायण्यां तैत्तिरीयब्राह्मणेऽपि - **स (प्रजापतिः) पितॄन्सृष्ट्वा मनस्यत्। तदनु मनुष्यानसृजत। तन्मनुष्याणां मनुष्यत्वम्**[११] इत्युक्तम्। महाभारते यथा -

**मनोर्वंशो मानवानां ततोऽयं प्रथितोऽभवत्।**
**ब्रह्मक्षत्रादयस्तस्मान्मनोजतास्तु मानवाः॥**[१२]

---

५ पा.सू. १.१०

६ श.प.ब्रा. ८.६.३.१८

७ मनुस्मृतौ १.६२-६३

८ अमरकोशे - नृवर्गे प्रथमः श्लोकः

९ पा.सू. ४.१.१६१

१० निरुक्ते १.३.२.७

११ मैत्रायण्याम् ४.२.१; तैत्तिरीयब्राह्मणे २.३.८.३

१२ महाभारते १.७५.१२-१३

**मानवाधिकारः**

शब्दोऽयं मानवः अधिकारश्चेत्यनयोः शब्दयोर्योगेन निर्मितः। तत्र मानवशब्दः पूर्वं व्याख्यातः तस्य च मनोरपत्यस्य मनुगोत्रापत्यस्य वा मानवस्य कृते यः प्राकृतिकोऽधिकारो विहितस्स मानवाधिकार इत्युच्यते। अधिकारशब्दश्च **अधीत्युपसर्गपूर्वकात्कृधातोः घञ्प्रत्ययान्निष्पद्यते।** तदुक्तं साहित्यदर्पणे - **अधिकारः फले स्वाम्यधिकारी च तत्प्रभुः॥**[13] अर्थादधिकारशब्दोऽपि अधीक्षणम्, कार्यभारः, आधिपत्यम्, शक्तिः, स्वत्वम्, स्वामित्वमित्यादिष्वनेकेष्वर्थेषु प्रयुक्तोऽस्ति। आधुनिक-चिन्तनपरम्परायां मानवाधिकारस्तादृशोऽधिकारोऽस्ति यन्मनुष्येभ्यो मानवजातेः सदस्यत्वान्निहित-शक्तीनां विकासायावश्यकोऽस्ति। एतादृशोऽधिकारो यत्सर्वानपि स्त्रीपुरुषान् स्वभावतः प्राप्तोऽस्ति। मानवाधिकारस्य व्यवस्था शताब्दान्मानवजातिभिः स्वाधिकाराय कृतप्रयत्नस्य सङ्घर्षस्य च परिणामोऽस्ति।

**वर्तमानकाले प्रचलितो मानवाधिकारः**

यद्यपि वैदिकवाङ्मये मानवाधिकारस्य चर्चा कर्त्तव्यमुखेन विहिताऽस्ति। तद्विषयोपस्थापनात्प्राक् वर्तमानयुगे विश्वस्तरे प्रचलितमानवाधिकारविषये तावत्किञ्चिद्वच्मि। स्थानीय-राष्ट्रिय-अन्ताराष्ट्रियस्तरे च सञ्चालितानां समस्तानामान्दोलनानां विश्वबन्धुत्वसम्बद्धानाम् उद्घोषणानाञ्चैकमात्रमुद्देश्यमासीत् समग्रमानवजातेः सम्यक् विकासः कल्याणञ्च। तस्यैवैतत्फलं यन्मानवाधिकाराणां सर्वत्र समभावेन संस्थापनार्थं संयुक्तराष्ट्रसंघस्य स्थापना २४ अक्टूबर १९४५ ई. वर्षे जाता। सर्वविधशान्तेरुपासको भारतदेशः संयुक्तराष्ट्रसंघस्य सक्रियः सदस्योऽस्ति। सर्वत्र शान्तिः स्यादेतदुपदेशबलाद्विश्वगुरुपदमलङ्करोत्यस्माकं देशः। अस्माकं देशे बहुविधानि नीतिशास्त्राणि प्रचलितानि सन्ति। सर्वाण्यपि शास्त्राणि मानवकल्याणायैव प्रवृत्तानि सन्ति। द्विविधं मानवकल्याणमत्र वर्णितं लौकिकं पारलौकिकञ्च। तदुभयकल्याणसम्पादकशास्त्राणामध्ययने संरक्षणे च भारतीयाः कटिबद्धाः सन्ति। तस्माद्भारतीयं संविधानं सर्वदेशानां कृते मार्गदर्शकत्वेन प्रतिष्ठितमस्ति। तत्रोपदिष्टविधीनामनुपालनं सर्वदेशेषु स्यादित्यस्मिन्नेव क्रमे १८ दिसम्बर १९४८ ई. वर्षे मानवाधिकारसम्बद्धं विश्वघोषणापत्रं प्रकाशितमभवत्। अत एव प्रतिवर्षं १० दिसम्बरस्य तिथिः मानवाधिकारदिवसरूपेणास्माभिरनुष्ठीयते। घोषणापत्रेऽस्मिन् प्रस्तावनया सह त्रिंशदनुच्छेदाः सन्ति। ते यथा -

- ❖ अनुच्छेदः - १. सर्वे मनुष्याः जन्मत एव गरिमदृष्ट्या अधिकारदृष्ट्या च स्वतन्त्राः समानाश्च सन्ति। तेभ्यो बुद्धिरन्तश्चेतनाश्च प्रदत्ताः सन्ति। तैः परस्परं भ्रातृत्वभावनया कार्यं कर्त्तव्यम्।

१३ साहित्यदर्पणे २९६

❖ अनुच्छेदः - २. प्रतिव्यक्तिरस्यां घोषणायामुपवर्णितानां समस्तानामधिकाराणां स्वतन्त्रतानाञ्च कृते सन्त्यर्हाः, तत्र मूलवंश-वर्ण-लिङ्ग-भाषा-धर्म-राजनैतिकविचारा अन्ये च विचाराः, राष्ट्रियो वा सामाजिकोद्भवः, सम्पत्तिः, जन्माधारे अन्यपरिस्थित्याधारे वा न कश्चिद्विभेदो भविष्यति।

एतदतिरिक्तं कमपि देशं राज्यक्षेत्रं वा तत्स्वाधीनं वा स्यात् न्यायाधीनं वा स्यात् अस्वशासितं वा स्यात् प्रभुतायां कमपि मर्यादाधीनं वा स्यात् राजनीतिकाधिकारिता-विषयाधारे अन्ताराष्ट्रियप्रास्थित्याधारे वा तस्य देशस्य राज्यक्षेत्रस्य वा कस्माच्चिन्मानवात् कश्चिद्विभेदो न भविष्यति।

❖ अनुच्छेदः - ३. प्रतिमानवं प्राणस्य स्वतन्त्रतायाः दैहिकसुरक्षायाश्चाधिकारोऽस्ति।

❖ अनुच्छेदः - ४. कमपि मानवं दासत्वेन परतन्त्रत्वेन च नैव स्थापयिष्यते, सर्वविधो दासत्वभावः दासव्यापारश्च प्रतिषिद्धो भविष्यति।

❖ अनुच्छेदः - ५. कमपि मानवं यन्त्रणां न प्रदास्यते, तेन सह क्रूरामानवीयापमानजनको वा व्यवहारो न भविष्यति, उतवा न तादृशो दण्ड एव देवो भविष्यति।

❖ अनुच्छेदः - ६. प्रत्येकं मानवं सर्वत्र विधिसमक्षं मानवरूपे मान्यताया अधिकारो भविष्यति।

❖ अनुच्छेदः - ७. सर्वे जनाः विधिसमक्षं समानाः सन्ति, कमपि विभेदं विना विधेः समानसंरक्षणस्याधिकारिणः सन्ति। सर्वेऽपि मानवा अस्याः घोषणाया अतिक्रमणे, विभेदविरुद्धे, एतादृग्विभेदोद्दीपनविरुद्धे च समानसंरक्षणस्याधिकारिणः सन्ति।

❖ अनुच्छेदः - ८. प्रतिमानवं संविधानेन विधिना या प्रदत्तमूलाधिकाराणामतिक्रमण-कारिकार्यविरुद्धे सक्षमराष्ट्रियाधिकरणैः प्रभावपूर्णस्योपचारस्याधिकारोऽस्ति।

❖ अनुच्छेदः - ९. कमपि मानवं स्वेच्छया नियमविरुद्धतया च निगडितं निर्वासितं वा नैव कर्तुं शक्यते।

❖ अनुच्छेदः - १०. प्रत्येको मानवः स्वाधिकाराणां बाधानां या तद्विरुद्धापराधिकारोपावधारणे च पूर्णतया समानरूपेण स्वतन्त्रो निष्पक्षाधिकरणैः ऋजुतान्तश्रवणाय सार्वजनिकवृत्तान्तश्रवणाय चाधिकृतोऽस्ति।

❖ अनुच्छेदः - ११ (१) तादृशं मानवं यमुपरि दाण्डिकापराधस्यारापोऽस्ति, एषोधिकारोऽस्ति यत्तं तावन्निरपराधं मंस्यते यावत्तं लोकविचारणे (न्यायालये) यत्र तं स्वात्मप्रतिरक्षार्थम् आवश्यकं साक्ष्यमुपलभ्येत विध्यनुसारं दोषयुक्तं (दुष्टं) न साध्यते।

(२) कमपि मानवं कस्माच्चित् कार्यात् लोपकारणाद्वा यत्क्रियमाणकाले राष्ट्रियमन्ताराष्ट्रिय-विध्यधीनं वा दाण्डिकमपराधं नासीत्, कस्मैचिद्दाण्डिकापराधाय दोषयुक्तमभिनिर्धारितं नैवः कर्तुं शक्ष्यते। तस्माद्दण्डादधिकदण्डायारोपितं नैव करिष्यते यत्तदानीं प्रचलितमासीत् यदाऽपराधः कृतः।

❖ अनुच्छेदः - १२. कस्यापि मानवस्यैकान्तभावेन, कुटुम्बेन, गृहेण, पत्रव्यवहारेण सह च स्वैरो हस्तक्षेप न करिष्यते, तस्य सम्मानमुपरि ख्यातिमुपरि च प्रहारो न भविष्यति। प्रत्येकं मानवं तादृशस्य हस्तक्षेपस्य प्रहारस्य वा विरुद्धे विधिसंरक्षणस्याधिकारोऽस्ति।

❖ अनुच्छेदः - १३. (१) प्रतिमानवं प्रतिराज्यसीमान्तर्गतसञ्चरणस्य निवासस्य च स्वतन्त्रताया अधिकारोऽस्ति।

(२) सर्व मानवाः स्वदेशमन्यं वा देशं परित्यक्तुं स्वदेशे पुरागमनाय चाधिकृताः सन्ति।

❖ अनुच्छेदः - १४. (१) सर्वेऽपि मानवा उत्पीडनवशादन्यस्मिन् देशे शरणं याचयितुं प्राप्तुं वाधिकृताः सन्ति।

(२) अस्याधिकारस्यावलम्बनं राजनीतिकेतरापराधेभ्यः संयुक्तराष्ट्रसंघस्य प्रयोजनानां सिद्धान्तानाञ्च प्रतिकूलकार्येभ्यः वास्तविकरूपेणाद्भुताभियोजनदशायां नैव गृहीतुं शक्यते।

❖ अनुच्छेदः - १५. (१) प्रत्येकं मानवं राष्ट्रियताया अधिकारो भविष्यति।

(२) कमपि मानवं स्वेच्छया तस्य राष्ट्रियतातो राष्ट्रियतापरिवर्तयितुमधिकाराच्च वञ्चितं कर्तुं शक्ष्यते।

❖ अनुच्छेदः - १६. (१) पूर्णवयस्काः स्त्रीपुरुषाश्च मूलवंश-राष्ट्रीयता-धर्मकारणाच्च काञ्चिदपि सीमां विनैव विवाहं कर्तुं कुटुम्बं स्थापयितुञ्चार्हाः सन्ति।

❖ (२) ते विवाहविषये विवाहितजीवनकाले तद्विघटने च समानाधिकारायाधिकृताः सन्ति ।

❖ अनुच्छेदः - १७. (१) प्रत्येकमप्येकाकिना अन्येभ्यो जनेभ्यः सम्मिल्य वा सम्पत्तेः स्वामित्वमधिगन्तुमर्हाः सन्ति।

(२) कमपि मानवं तत्सम्पत्तिभ्यः स्वेच्छया वञ्चितं नैव कर्तुं शक्ष्यते।

❖ अनुच्छेदः - १८. प्रत्येकमपि विचारस्य अन्तःकरणस्य (चेतनायाः) धर्मस्वातन्त्र्यस्य चाधिकारोऽस्ति। एतदधिकारान्तर्गतं स्वधर्मं विश्वासं वा परिवर्तयितुं स्वातन्त्र्यं वैयक्तिकस्तरे सामाजिकस्तरे चैकाकिना अन्येभ्यो जनेभ्यो मिलित्वा सार्वजनिकरूपेण वा शिक्षयितुमध्यस्तुं व्यवहर्तुमर्चितुं पालयितुं वा स्वधर्मं विश्वासं वा प्रकटयितुं स्वातन्त्रमस्ति।

❖ अनुच्छेदः - १९. प्रत्येकमप्यभिमतं प्रदातुभिव्यक्तेश्च स्वातन्त्र्यमस्ति। एतदधिकारान्तर्गतं हस्तक्षेपं विनैवाभिमतं प्रस्थापयितुं केनापि सञ्चारमाध्यमेन सीमाविचारं विना वा सूचनानामादानप्रदानयोः स्वातन्त्रमस्ति।

❖ अनुच्छेद - २०. (१) प्रत्येकमपि शान्तिपूर्वकं सम्मेलनाय सङ्घटनाय च स्वातन्त्र्यस्याधिकारोऽस्ति।

(२) कमपि जनं कस्मिंश्चिसम्मेलने सङ्घटने वा सम्मेलयितुं न कश्चिद्विवशीकर्तुमधि-कृतोऽस्ति।

❖ अनुच्छेदः - २१. (१) प्रत्येकमपि स्वदेशस्य सर्वकारे (शासने) प्रत्यक्षतया स्वतन्त्रतापूर्वकं निर्वाचितप्रतिनिधिमाध्यमेन वा भागं गृहीतुमधिकृतोऽस्ति।

(२) प्रत्येकमपि जनः स्वदेशस्य लोकसेवायां तुल्यमधिकार संधते।

(३) लोकमतं सर्वकारीयप्राधिकारस्याधारो भविष्यति। अस्याभिव्यक्तिः कालबद्धेषु वास्तविकनिर्वाचनेषु भविष्यति, यानि निर्वाचनानि सार्वभौमिकैः समानमताधिकारैः गुप्तमतदानै समतुल्यस्वतन्त्रमतदानप्रक्रियाभिश्च सम्पादितानि भविष्यन्ति।

❖ अनुच्छेदः - २२. प्रत्येकं जनः समाजस्य सदस्यत्वेन सामाजिकसुरक्षामाप्तुमधिकृतो वर्तते। स च राष्ट्रियप्रयासेनान्ताराष्ट्रियसहयोगेन प्रतिराज्यगठनं संसाधनानुसारञ्च तादृशान् समस्तानप्यार्थिकसामाजिकसांस्कृतिकाधिकारानवाप्तुमर्हो भवति यत्तस्य गरिमायाः क्तित्वस्य चोन्मुक्तविकासायानिवार्या भवन्ति।

❖ अनुच्छेदः - २३. (१) प्रत्येकमपि कार्यं कर्तुं, नियोजनानां स्वतन्त्रचयनस्य, कार्याणां न्यायोचितस्थितीनाम् कार्याणामनुकूलदशानां, निर्वृत्तितानां विरुद्धे संरक्षणमवाप्तुमधिकारो वर्तते।

(२) प्रत्येकमपि किमपि विभेदं विना समानकार्याय समानवेतनस्याधिकारो वर्तते।

(३) प्रत्येकमपि जनं यो कार्यं करोति तमेतादृशं न्यायोचितमनुकूलं पारिश्रमिञ्च प्राप्तुमधिकारोऽस्ति येन तस्य स्वात्मानः स्वकुटुम्बस्य च मानवगौरवानुरूपं जीवनं सुनिश्चितं स्यात् तथा चावश्यके सति सामाजिकसंरक्षणस्य विविधसाधनैस्तमनुपूरयितुं शक्यते।

(४) प्रत्येकमपि स्वहितं संरक्षयितुं व्यावसायिकसङ्घनिर्मातुं तत्र स्वात्मानं नियोजयितुज्याधिकारो वर्तते।

- अनुच्छेद- २४. प्रत्येकमपि विश्रामस्यावकाशस्य चाधिकारो वर्तते। यस्यान्तर्गतं कार्यहोराणां युक्तियुक्तसीमायाः पारिश्रमिकेन सह नियतावधिकावकाशाश्चापि सन्ति।

- अनुच्छेदः- २५. (१) प्रत्येकमपि तादृग्जीवनस्तरस्याधिकारोऽस्ति यत्तस्य स्वकीयस्य स्वकुटुम्बस्य च स्वाथ्यसंरक्षणाय कल्याणाय च पर्याप्तं स्यात्, तदन्तर्गतं भोजनं, वस्त्रम्, आवासः, चिकित्सा, आवश्यकसामाजिकसेवाश्च सन्ति। निर्वृत्तितायां, रुग्णतायां, अशक्ततायां, वैधव्ये, वृद्धावस्थायां तथा च तस्य नियन्त्रणरहितासु परिस्थितिषु जीवनयापनाभावदशायां सुरक्षायाः पूर्णोऽधिकारो वर्तते।

**वैदिकवाङ्मये मानवाधिकारसूत्राणि**

विदितमेवास्ति यत्समस्तविश्ववाङ्मयस्य मूलस्रोतांसि वेदा एव सन्ति। वेदेषु सर्वविधज्ञानविज्ञानसूत्राणि सन्ति विद्यमानानि। वेदानां विषये भगवता मनुना प्रोक्तं यत् **सर्वज्ञानमयो हि सः**[१४] इति। मानवानां सर्वविधकल्याणाय प्रवृत्ताः सन्ति। मन्त्रब्राह्मणारण्यकोपनिषदितिहास-पुराणधर्मशास्त्राणि षड्वेदाङ्गानि व वैदिकवाङ्मयान्तर्गतान्येव सन्ति। वैदिकवाङ्मयेषु श्रेयःशास्त्रं प्रेयःशास्त्रञ्चोभयं समभावेन समेधितम्। तस्मात्यमस्तानां धर्माणां मूलत्वेन वेदाः स्तुताः सन्ति। विश्वकल्याणाय सर्वविधसूत्रवर्णनपुरस्सरमखिलं विश्वमेकरूपं कर्तुं वेदेषु **यत्र विश्वं भवत्येकनीडम्**[१५] इति सूत्रं निर्दिष्टमस्ति। अमुमेव सूत्रमभिलक्ष्य संयुक्तराष्ट्रसङ्घेन मानवाधिकारमाध्यमेन समस्तं विश्वमेकीकर्तुं विश्वघोषणापत्रं प्रकाशितम्। मानवाधिकाराणां जागत-अभिघोषणापत्रे यानि तथ्यान्यूररीकृतानि तानि सर्वाणि वैदिकवाङ्मयस्यावदानान्येय सन्तीति कथने नातिशयोक्तिर्भविष्यति। इतः पूर्वं मानवाधिकाराणां जागत-अभिघोषणापत्रोक्तानि त्रिंशदनुच्छेदेषूपवर्णितानि तथ्यानि प्रस्तुतानि, साम्प्रतं तेषां सूत्राणि वैदिकवाङ्मये कुत्र कथञ्चोपदिष्टानि सन्तीति ब्रूमहे। आशासे विद्वांसो मच्छोधसरण्या सन्तुष्टाः सन्तो मानवाधिकाराणां जागत-अभिघोषणापत्रस्य वैदिकवाङ्मयादवदातत्वप्रतिपादनेन सहैकमता भविष्यन्ति। मानवाधिकाराणां जागत-अभिघोषणापत्रे प्रस्तुतानुच्छेदानुक्रमेणात्र वेदोक्तानि सूत्राप्युपस्थाप्यन्ते, येषां माध्यमेन मानवाधिकारमूल्यस्य वेदानुमोदितत्वं सुस्पष्टं भवतीति मन्ये। तानि च सूत्राणि यथा -

- अनुच्छेदः - १
  - परस्परं भावयन्तः श्रेयः परमवाप्स्यथ। - गीता - ३.११
  - नूनं जनाः सूर्येण प्रसूताः। - ऋ.स. - ७.६३.४
  - मित्रस्य चक्षुषा समीक्षामहे । - शु.य.सं. - ३६.१८
  - मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुतस्वसा। - अ.सं. - ३.३०.३

१४ मनुस्मृतौ - २.७

१५ शु.य.सं. - ३२.८

❖ अनुच्छेदः - २

➢ पुरुष एवेदं सर्वम्। - शु.य. सं. - ३१.२

➢ सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः। - प्रसिद्धसूक्तिः

➢ स्त्री चाविशेषत्। - का.श्रौ.सू. - १.१.७

➢ रथकारस्याधाने। - का.श्रौ.सू. - १.१.९

➢ निषादस्वपतिगविधुकेऽधिकृतः। - का.श्रौ.सू. - १.१.१२

➢ सर्वेषामविशेषात्। - का.श्रौ.सू. - १.१.३

❖ अनुच्छेदः - ३

➢ प्राणो हि भूतानामायुः। - तै.सं. - ८.३.१

➢ प्राणः प्रजानामुदयत्येष सूर्यः। - मै.उप. - ६.८

➢ प्राणं सूर्य उपासते। - अ.सं. - ११.४.१२

➢ तनूषु विश्वा भुवनानि येमिरे। - ऋ.सं. १०.५६.५

❖ अनुच्छेदः - ४

➢ न मे दासो नार्यो महित्वा। - अ.सं. - ५.११.३

❖ अनुच्छेदः - ५

➢ सर्वभूतेषु चात्मानम् । - शु.य.सं. - ४०.६

➢ सर्वभूतानि तृप्यन्तु। - बौ.ध.सू. - २५.९.१४

➢ सर्वभूतहिते रताः। - गीता - ५.२४

➢ असंबाधं मध्यतो मानवानाम्। - अ.सं. - १०.१९१.३

➢ मा हिंसीः पुरुषं जगत्। - शु.य.सं. - १६.३

➢ तत्र हिंसा नाम मनोवाक्कायकर्मभिः सर्वभूतेषुसर्वदा क्लेशजननम्। - शाण्डिल्योप - १.१

❖ अनुच्छेदः - ६

➢ समानार्षेयोऽहं भोः। - शां.गृ.सू. - २.२.७

- विश्वामित्रस्य रक्षति रक्षेदं भारतं जनम्। - ऋ.सं. - ३.५३.१२

❖ अनुच्छेदः - ७

- समानो मन्त्रः समितिः समानी। - ऋ.सं. - १०.१९१.३
- राजा राष्ट्रं विरक्षति। - अ.सं. - ११.५.१७

❖ अनुच्छेदः - ८

- स्वयं श्रश्नानो वरुणस्य पाशाद्। - अ.सं. - ११.१.१५
- मुञ्चन्तु मा शपथ्यात्। - ऋ.सं. - १०. ९७.१६

❖ अनुच्छेदः - ९

- मुच्यमानो निरेनसः। - अ.सं. - १२.२.१२

❖ अनुच्छेदः - १०

- श्रृणुतं म इमं हवम्। - ऋ.सं. - ८.७३.१०
- श्रृणोत नः सुमतिं यज्ञियासः । - मै.सं. - ४.१४.९
- श्रृण्वतो देवा अवसे स्वस्तये। - ऋ.सं. - १०.६३.११

❖ अनुच्छेदः - ११

- अनागो हत्या वै भीमा कृत्ये। - अ.सं. - १०.१.२९
- अनाधृष्टं देवकृतं यदेनः। - मै.सं. - ४.१४.१७
- मा राजप्रेषितो दण्डः। - पा.गृ.सू. - ३.१५.२०

❖ अनुच्छेदः - १२

- मा मा हिंसीरधिगतं पुरस्तात्। - आप.श्रौ.सू. - ७.६.५
- मा मे प्रजया मा पशूनां मा मम प्राणैरप प्रसृप मोत्सृप। - तै.आर. - १.१४.२-४

❖ अनुच्छेदः - १३

- सर्वा दिशो अभयास्ते भवन्तु। - अ.सं. - १९.४५.४
- सर्वा दिशः पुरुष आबभूव। - अ.सं. - १०.२.२८
- सर्वात्मा सर्वाः प्रजा सत्रैकं भवन्ति। - तै.आ. - ३.११.२

- पुनरस्ति निवर्तनम्। - अ.सं. - ३.६.७

❖ अनुच्छेदः - १४

- सर्वां लोकान् परिभूर् भ्राजमानः। - अ.सं. - १३.२.१०
- सर्वां लोकान् अनृणा सञ्चरेमहि। - मा.श्रौ.सू. - २५.२.२२

❖ अनुच्छेदः - १५

- राष्ट्राय मह्यं बध्यताम्। - अ.सं.- १.२९.४
- राष्ट्रं रोह च द्रविणं च रोह। - अ.सं.- १३.१.३४
- मा त्वद्राष्ट्रमधिभ्रशद्। - शु.य.सं. - १२.११

❖ अनुच्छेदः - १६

- तस्माद् समानादेव पुरुषाद् अत्ता चाऽऽद्यः च जायते इदं हि चतुर्थे पुरुषे तृतीये सङ्गच्छामहऽइति विदेवं दीव्यमाना जात्या आसते। - श.प.ब्रा. - ९.८.३.६
- स्वयं यजस्व स्वयं जुषस्व। - शु.य.सं.- ३२.१५
- इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः॥ - मनु. - ३.३२

❖ अनुच्छेदः - १७

- रयिं मे दाः। - अ.सं. - १९.३१.१२
- रयिं मे विश्वे नियच्छन्तु देवाः। - अ.सं. - १८.३.११
- रयिं नो देहि यज्ञियम्। - मै.सं. - ४.१०.५
- रयिं नो देहि जीवसे। - शां.श्रौ.सू. - ३.१५.४
- वयं स्याम पतयो रयीणाम्। - शु.य.सं. - १०.२०
- अथानो वर्धया रयिम्। - शु.य.सं. - ३.१४
- मा वयं रायस्पोषेण वियौष्म। - शु.य.सं. - ४.२२

❖ अनुच्छेदः - १८

- धर्मो मा धर्मणः पातु । - मै.सं. - १.५.४

- धर्मों मे जनपदे चर्यताम्। - कौशि.सू. - १७.१९
- धर्मेण पापम् अप नुदन्ति। - तै.आर. - १०.६३.१

❖ अनुच्छेदः - १९

- यद् वदामि मधुपत् तद् वदामि। - अ.सं. - १२.१.५८
- यद बाग वदन्त्यविचेतनानि। - ऋ.सं. - ८.१००.१०
- यद् वाचो यच्च मे हृदः। - का.सं.- ३४.१९

❖ अनुच्छेदः - २०

- सभा च मा समितिश्चावताम्। - अ.सं. - ७.१२.१
- सभ्य सभां मे पाहि। - अ.सं. - १९.५५.६
- सङ्गत्यां सुमना असत। - ऋ.सं. - १०.१४१.४
- सङ्गच्छध्वं संवदध्वम्। - ऋ.सं. - १०.१९१.२

❖ अनुच्छेदः - २१

- राजा न मित्रं प्रमिणाति धीरः। - ऋ.सं. - ९.९७.३०
- राजा न सत्यः समितीरियानः। - ऋ.सं. - ९.१२.६
- तत्र माममृतं कृधि। - ऋ.सं. - ९.११३.८
- आ त्या हार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः। विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत्॥
  इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः। इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय॥
  इममिन्द्रो अदीधरद् ध्रुवं ध्रुवेण हविषा। तस्मै सोमो अधि ब्रवत् तस्मा उ ब्रह्मणस्परि॥
  ध्रुवा चौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे। ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामयम्॥
  ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः। ध्रुवं न इन्द्रश्याग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥
  ध्रुवं ध्रुवेण हविषाऽभि सोमं मृशामहि। अथोत इन्द्रः केवलीर्विशो बलिहृतस्करत्॥

  - ऋ.सं. - १०.१७३.९-६

❖ अनुच्छेदः - २२

- सर्वतः परिरक्षतु। - ऋ.सं. (खिलकाण्डे) - १०.१२७.११
- शर्म विश्वमिदं जगत्। - तै.आ. - ४.१.१

- शर्म यच्छत् द्विपदे चतुष्पदे। - ऋ.सं. - १०.३७.११

❖ अनुच्छेदः - २३

- युजो युज्यन्ते कर्मभिः । - शु.य.सं. - २३.३७
- युजे वां ब्रह्म पूर्व्यं नमोभिः। - शु.य.सं. - ११.५०; ऋ.सं. १०.१३.१
- युजो युक्ति अभि यत् संवहन्ति। - ऐ.आर. - २.३.८.२,३
- समानम् अन्नेनाप्यायस्व। - तै.आर. - १०.३६.१
- समानम् अर्थं वितरित्रता मिथः। - ऋ.सं. - १.१४४.३
- समानम् अर्थं चरणीयमाणा। - ऋ.सं. - ३.६९.३
- समानं मन्त्रम् अभिमन्त्रये वः। - ऋ.सं. - १०.१९१.३
- समानां राजा विभृतः पुरुत्रा। - ऋ.सं. - ३.५५.४
- एतदतिरिक्तं सोमयागे ऋत्विजां दक्षिणाविभागो द्रष्टव्यः। यथा - यथारम्भं द्वादश द्वादश आद्येभ्यः (ब्रह्मोद्गातृहोत्रध्वर्युभ्यः), षट् षड्द्वितीयेभ्यः (ब्राह्मणच्छंसिप्रस्तोतृ-मैत्रावरुणप्रस्थातृभ्यः), चतस्रश्चतस्रस्तृतीयेभ्यः (पोतृप्रतिहर्त्रच्छावाकनेष्टृभ्यः), तिस्रस्तिस्र इतरेभ्यः (अग्नीत्सुब्रह्मण्यग्रावस्तुदुन्नेतृभ्यः) - का.श्रौ.सू. - १०.२.२४। एवं क्रमेण शतं गवां दक्षिणादानं विधीयते।

❖ अनुच्छेदः - २४

- प्राणा अवकाशाः। - श.प.ब्रा. - १४.१.४१; कौषी. - ८.६
- स इन्द्र एतमवकाशमपश्यत् तेनासुरानभ्यभवत्। - मैत्रा. - ४.१.१२

❖ अनुच्छेदः - २५

- अग्नेऽभ्यावर्तिन्नभि मा निवर्तस्वायुषा वर्चसा प्रजया धनेन। सन्या मेधया रय्या पोषेण। - शु.य.सं. - १२.७
- आयुर्नो देहि जीवसे। - शां.गृ.सू. - १.२५.७
- आयुर्मे धेहि आयुर्यजमाने। - आप.श्रौ.सू. - ५.१.१४
- आयुः प्राणं प्रजां पशून् कीर्तिम्। - अ.सं. - १९.६३.९
- मातृदेवो भव। - तै.उप. - १.११.१

- न हि माता पुत्रं हिनस्ति न पुत्रो मातरम्। - श.प.ब्रा.- ५.२.१.१८
- पत्नीं मा हिंसी। - आप.श्रौ.सू. - ९.२.९
- रक्षाणो अग्ने तनयानि तोका। - ऋ.सं. - १०.१.८
- शिशुं रिहन्ति मतयः पनिप्नम्। - ऋ.सं. - ९.८५.११

❖ अनुच्छेदः - २६

- शिक्षा स्तोतृभ्यो मातिधग्भगो नः। - ऋ.सं. - २.११.२१
- शिक्षा सखिभ्यः पुरुहूत नृभ्यः। - ऋ.सं. - ७.२७.२
- शिक्षन्तो नोप शेकिम। - अ.सं. - ६.११४.२
- विद्यया देवलोकः देवलोको वै लोकानां श्रेष्ठतमस्तस्माद्विद्यां प्रशंसन्ति।
  - श.प.प्रा. - १४.४.३.२४
- शिक्षा वस्वो अन्तमस्या। - ऋ.सं. - १.२७.५
- शिक्षाण इन्द्र राय आ। - ऋ. सं. - ८.१२.९
- पितुर्न पुत्राः क्रतुं जुषन्त। - ऋ.सं. - १.६८.९
- पितृणां च मन्मभिः । - ऋ.सं. - ८.४१.२

❖ अनुच्छेदः - २७

- समानं वा सजात्यम्। - ऋ.सं. - ८.७३.१२
- समानं व्रतं सह चित्त्मेषाम्। - अ.सं. - ६.६४.२
- समानजन्मा क्रतुरस्ति वः शिवः। - मै.सं. - २.१३.१०
- आनन्दो मोदः प्रमोदः। - तै.सं. - ३.१०.१.१.३
- आनन्दो ब्रह्मणो विद्वान्। - त.उप. - २.४.१
- आत्मा चात्मनि श्रितः, आत्मा हृदये, हृदयं मयि, अहममृते, अमृतं ब्रह्मणि।
  - तै.बा.- ३.१०.८.९
- यत्रावहन्ति कवयः पुरूणि। - मा.श्रौ.सू. - १.७.३.४२

❖ अनुच्छेदः - २८

- यत्रोत मर्त्याय कम्। - ऋ.सं. - ४.३०.६
- यो यदिच्छति तस्य तत्। - कठोपनि. - १.२.१६

❖ अनुच्छेदः - २९

- यत्र यन्ति सुकृतो नापि दुष्कृतः। - मै.सं. - १.२.१५
- यत्र सुहार्दः सुकृतो मदन्ते। - तै.आ. - ९.११३.११
- प्राप्यैवं मानुषान् कामान्। - मा.गृ.सू. - २.११.११
- प्रिये धामनि धामनि। - अ.सं. - १२.१.५२
- प्रियो विशाम् अतिथिर्मानुषीणाम्। - ऋ.सं. - ५.१.९

❖ अनुच्छेदः - ३०

- नैषा पितृन् गच्छति नोत देवान्। - आश्व.ध.सू. - २.७.१७.८
- नैनं हिन्वन्त्यपि वाजिनेषु। - ऋ.सं. - १०.७१.५
- शासेन विशिशासिषद्। - शां.श्रौ.सू. - १५.२५
- राजा राष्ट्रं विरक्षति। - अ.सं. - ११.५.१७
- निधिरेष मनुष्याणाम्। - शां.गृ.सू. - १.२.८

वैदिकवाङ्मये मानवकल्याणसम्बद्धानि बहूनि साक्ष्यभूतानि सूत्राणियत्र तत्रोपलब्धानि भवन्ति। तेषां समेषामत्र लघुनिबन्धे समायोजनमसम्भवमेवास्ति। तथापि यान्युपयोगीनि सूत्राणि मया प्राप्तानि तान्यत्र प्रस्तुतानि।

**उपसंहारः -**

उपर्युक्तेन साक्ष्येन विवेचनेन चेदं सुस्पष्टं भवति यन्मानवकल्याणाय सर्वविधानि सूत्राणि वैदिकवाङ्मये सन्त्युल्लिखितानि। मानवाधिकारविषयकानि यावन्ति सूत्राणि वेदेषूपनिवद्धानि सन्ति तान्यादाय पृथग्ग्रन्थलेखनं कर्तुं शक्यते। अद्यत्वे आवश्यकमिदमस्ति यदेतेष्वाधुनिकविषयेषु नित्यनूतनतथ्यानामाविष्कर्तुं बृहत्तमानि शोधकार्याणि स्युः। इतो भिन्नान्यपि मानवकल्याणसम्बद्धानि रहस्यात्मकानि तथ्यान्यादाय विश्वविद्यालयेषु शोधच्छात्राः कार्यं कुर्वन्त्विति।

एतदपि वक्तुमीहे **यन्मानवाधिकारमूल्यस्य वेदानुमोदितत्वमिति** विषये नास्ति कस्यापि लेशतोऽपि सन्देहस्यावसरः। यतस्तु वैदिकवाङ्मयस्येदं वैशिष्ट्यमस्ति यत्संसारस्य समस्तमपि

वाङ्मयमित एकोपजीवितानि सन्ति। युगयुगान्तराद्वैदिकवाङ्मस्य अविच्छिन्ना धारा प्रवहता सती सर्वलोकोपकारिसिद्धान्तप्रतिपादनमुखेन जगत्कल्याणं सम्पादयति। तदुक्तमपि -

**युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।**

**लेभिरे तपसा पूर्वमनुज्ञाता स्वयम्भुवा ॥**[१६]

इत्यनया सूक्त्या विस्पष्टं भवति यद्वेदानां समग्रमपि वाङ्मयं तपोनिरतैर्महर्ष्यादिभिः प्रत्यक्षीकृत्य जगत्कल्याणभावनया शिष्योपशिष्यपरम्परया प्रसारितम्। तदुक्तं यास्केन - **साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मेभ्य उपदेशेन मन्त्रान् सम्प्रादुरिति।**[१७]

वाङ्मयस्यास्यः सकलविश्ववाङ्मयेषु श्रेष्ठत्वमुपपादयता वैदेशिकेन विदुषा मैकडोलनेनोक्तम् - **सर्वेषामपि सनातनानां साहित्यानां मध्ये वैदिकवाङ्मयं मौलिकतामूल्येन सौन्दर्यगुणप्रकर्षणेन च महत्त्वपूर्णपदमवाप। मानवप्रकृतिविकासानुशीलनस्य प्रधानसाधनता तु वेदेषु अन्यवाङ्मयेभ्यो निःसंशयम् उत्कृष्टा एव।** विण्टरट्जिमहोदयेनापि सर्वसंस्कृतिदर्शनयोर्विकासं विज्ञातुमस्याध्ययनं नितरां व्यपेक्षत इति प्रतिपादयता प्रोक्तम् - **यद्यस्माकं स्वसंस्कृतेरुपक्रमप्रक्रमाः बुभुत्सिताः, यदि चास्माकं पुराणतमभारोपीयसंस्कृतिः विविदिषिता तदा यत्र भारोपीयजनानां वर्षिष्ठं वाङ्मयं सुरक्षितं तदा भारतवर्षमेव खत्वस्माकं गतिरिति ।**

विषयस्य गाम्भीर्यं विलोक्येदमेव वक्तुमुत्सहे यत् -

**अनन्तशास्त्रं बहुलाश्च विद्या अल्पश्च कालो बहुविघ्नता च।**
**यत्सारभूतं तदुपासनीयं हंसो यथा क्षीरमिवाम्बुमध्यात्॥**

इत्यलमतिविस्तरेण।

**विद्यावाचस्पतिः डॉ. सुन्दरनारायणझाः**

सहाचार्यो वेदविभागे,

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालय

बी-४, कुतुबसांस्थानिकक्षेत्रम्, नवदेहली १६

१६ ऐतरेयब्राह्मणे सायणभाष्ये उपोद्घाते

१७ निरुक्ते - १.६.२०

**सहायकग्रन्थसूची :**

*अमरकोषः*, व्याख्या. ब्रह्मानन्दत्रिपाठी, वाराणसी : चौखाम्बाविद्याभवन, २०००।

*निरुक्तम् (निरु.)*, सम्पा.मुकुन्दझा, वाराणसी : चौखाम्बासंस्कृतप्रतिष्ठान, २००५।

*ऋग्वेदः*, सम्पा. रामगोविन्दशास्त्री, वाराणसी : चौखाम्बाविद्याभवन, २००७।

*शतपथब्राह्मणम् (श.ब्रा.)*, सम्पा. हरिस्वामी, दिल्ली : नागपब्लिशर्स, २००२।

*मनुसंहिता (मनु.)*, सम्पा. मानवेन्दुवन्दोपाध्यायः, कोलकाता : संस्कृतपुस्तकभण्डार, २०१२।

*तैत्तिरीयमहाब्रह्मणम् (तैत्ति. ब्रा.)*, सम्पा. सत्यव्रतसामश्रमी, मैसुर : १९२१।

*ऐतरेयब्राह्मणम् (ऐ.ब्रा.)*, सम्पा. सत्यव्रतसामश्रमी, कोलकाता : १८९५।

*शुक्लयजुर्वेद (माध्यन्दिनसंहिता - श.यु.वे.)*, सम्पा. रामकृष्णशास्त्री, वाराणसी : चौखम्बाविद्याभवन, २०१३।

*तैत्तिरीयोपनिषद्*, गोरक्षपुर : गीताप्रेस, १९९१।

*साहित्यदर्पणम्*, सम्पा. आचार्य शेषराज, वाराणसी : चौखाम्बाकृष्णदास एकादमी,२००५।

फडिया, बी. एल. *भारत का संविधान और मानव अधिकार*, हजारीबाग : विनोबा भावे विश्वविद्यालय, २००५।

कुमारी, वीणा. *मानवाधिकार की अवधारणा एक दार्शनिक अनुशीलन*, पटना : विहार हिन्दी ग्रन्थ अकाडमी, २०१७।

अङ्क- ३६ वेदविद्या
जुलाई - दिसम्बर २०२०
ISSN-२२३०-८९६२
UGC 'CARE' list Ind. Lang. Sl.No. 97

# वैदिकवाङ्मये यमः

**शत्रुघ्नपाणिग्राही**

**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।**
**एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥**[१]

इति ऋग्वेदीयवचनानुसारं ज्ञायते देव एक एवाऽस्ति। तस्य बहुत्वस्य कल्पना तस्य कस्यापि गुणानामाधारेणैव भवति। शुक्लयजुर्वेदमन्त्रानुसारं[२] ज्ञायते प्रतिलोकमेकादशसंख्यकाः देवाः सन्ति। शतपथब्राह्मणे तेषां संख्याविषये श्रूयते अष्टौ वसवः, एकादशरुद्राः, द्वादशादित्याः, इन्द्रस्यैव प्रजापतिश्चेति त्रयस्त्रिंशद्देवाः भवन्ति। देवानां सङ्ख्या त्रयस्त्रिंशदिति ऋग्वेद एवाह। त्रिधा विभक्तस्यास्य प्रपञ्चस्य स्थानत्रयाधिवासित्वविक्षया त्रिधा विभक्तास्ते देवा: 'त्रिरेकादेश' इत्येवं बहुत्र निर्दिश्यन्ते। परन्तु नैषा परिगणना निश शेषात्मिका। यतो हि त्रयस्त्रिंशतोऽन्येऽपि बहवो देवाः सूक्तभाजो दृश्यन्ते। तत्र द्वयधिकै: समग्रैः सूक्तैः स्तूयमानाः प्रधानदेवाः विंशतिसङ्ख्या अपि दुर्लभाः। तेषु ऋग्वेदे २५० सूक्तैः स्तूयमानः इन्द्रः, २०० सूक्तैः स्तूयमानोऽग्निः शताधिकैः सूक्तैः स्तूयमानः सोमश्च प्रधानतमाः। वर्षदेवः पर्जन्यः, मृत्युदेवो यमश्च त्रिभिस्त्रिभिः सूक्तैः स्तूयेते। यास्कमतानुसारेण अस्य जगतः मूले एकैव महत्त्वशालिनी शक्तिर्विद्यमानाऽस्ति । सा शक्तिर्निरतिशयैश्वर्यशालित्वेन देवता इति पदेनाभिधीयते । तामेवेकां देवतां बहुरूपेण जनाः स्तुवन्ति। परन्तु यदा यस्य देवस्य स्तुतिः क्रियते तदा स देवः सर्वाधिकव्यापकः, लोकोपकारी च मन्यते। वैदिकवङ्मयेऽपि द्योतमान:, स्वयंप्रकाशः, सर्वेश्वर: सर्वेषु देवेषु प्रथमो यमराज एवास्माकं सर्वेषां मानवानां विहितकर्मफलं जानातीति प्रतिपादितं वर्तते। ऋग्वेदे पितृऋषि एकस्मिन् मन्त्रे यमस्य सर्वज्ञत्वं वर्णयति।[३] सर्वेषु देवेषु प्रथमो यमराजः एवास्माकं सर्वेषां मानवानां विहितकर्मफलं जानाति । सर्वेषां जन्म-जीवन-मरण-स्वर्ग-मोक्ष-प्रबन्धनस्य यमस्याधीनस्यत्वात्। तस्य यमस्य मार्गातिक्रमणं न केनाचिज्जीवे सांसारिकेण कर्तुं शक्यते। येन मार्गेण अस्माकं पूर्वजाः गताः तेनैव

---

१ ऋग्वेदः - १/१६४/४६, अथर्ववेदः - ९/१०/२८

२ ये देवासो दिव्येकादश स्थ पृथिव्यां मध्येकादश स्थ। अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥
(शु.यजु. ७ / १९ )

३ यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ । यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या३ अनु स्वाः॥
(ऋग्वेदः १०/१४/२)

मार्गेण सर्वे जीवाः स्व-स्व कर्मानुसारं गमिष्यन्ति। अर्थात् अस्माकं पूर्वजाः येन मार्गेण स्वकीय जीवनमूल्यं लोके स्थापयन् स्वर्गादिलोकं प्रययुः तेनैव मार्गेण सर्वेऽपि जाताः जीवाः मनुष्या वा स्व स्व कर्मानुसारं विभिन्नलोकेषु यान्तीति शाश्वतोऽयं यमस्य नियमः।

ऋग्वेदे यमदेवतायाः आहत्य अष्टाविंशति ऋचः प्राप्यन्ते। पौराणिकसम्प्रदायानुसारं यमः पितृलोकस्य राजा अस्ति, यत्र मरणान्तरं पितरः निवसन्ति। वैदिकग्रन्थदृशा तावद् - आत्मा परित्यक्तजडशरीरः पितृपितामहादिभिः क्षुण्णेन पथा नित्यालोकमयं प्राप्य तत्र परेताधिराजेन यमेन सह परिक्रीडमानान् देवैः सह सम्भुञ्जनान् स्वर्गतान् स्वपितृन प्रपद्यते। यद्यप्येवं मृत्युमार्गाश्रयणात् यमो भयङ्करत्वेन वर्णनीयोऽभूत् तथापि नायमथर्ववेदपुराणादिवद् ऋग्वेदे तादृशमृत्युदेवतात्वेनाङ्गीकृत। निरुक्ते यमस्य गणना द्युस्थानीयदेवरूपेण, अन्तरिक्षस्थानीय देवरूपेण च भवति।[४] निरुक्तकारः यमस्य निर्वचनं कृत्वा कथयति "यमो यच्छतीति सतः"।[५] अयं शब्द: "यम" उपरमे धातो निष्पन्नः। जीवनप्रदानं करोति तथा नियमनं करोति तस्मात् कारणात् मध्यमस्थानीयवायुः प्राणो वा यम इति नाम्रा ज्ञायते। तस्मात् कारणात् द्युस्थानीय आदित्योऽपि यम इति कथ्यते[६]। ब्रह्मणग्रन्थानुसारं यमशब्देन सूर्याग्निवायुनां ग्रहणं जातते। यथा - एष वै यमो य एषः (सूर्यः) तपति।[७] निरुक्तानुसारम् अग्निदेवोऽपि यमसञ्ज्ञः यथा - "अग्निरपि यम उच्यते"।[८] "अग्निर्वै यमः" इति शतपथब्राह्मणेऽपि श्रूयते।[९] पार्थिवोऽग्निरेव यमः इति श्रूयते ऋग्वेदे यथा -

**सेनेव सृष्टामं दधात्यस्तुर्न विद्युत्त्वेषप्रतीका।**
**यमो ह जातो, यमो जनित्वं, कनीनां जारः पतिर्जनीनाम्॥**[१०]

पुनश्च **"अयं वै यमो य एष (वायु:) पवते"**[११] इति शतपथवचनेन ज्ञायते वायुरपि यम उच्यते। अपि च यमः जीवात्मापरकः इति ऋग्वेदस्य एकस्मिन् मन्त्रे वर्णितः।

यमः प्राणदेवता विद्यते मृतात्मनां स मार्गदर्शकः च। वैदिकमन्त्राणां मतेन यमदेवस्य पिता विवस्वान्[१२] अस्ति तथा त्वष्टुः पुत्री, सरण्यू तस्य माता अस्ति। यमस्य सम्बन्धः

---

४ निरुक्तम् - १०.२०, १२/२८

५ निरुक्तम् - १०/२०

६ यस्मिन् वृक्षे सुपलाशे देवैः सम्पिवते यमः। अत्रानो विश्पतिः पिता पुराणां अनुवेनति॥ निरुक्तम् - १२/३/१७

७ शतपथब्राह्मणम् - १४/१/३/४

८ निरुक्तम् - १०/२/१२

९ शतपथब्राह्मणम् - ७/२/१/१०

१० ऋग्वेदः - १/६६/४

११ शतपथब्राह्मणम् - १४/२/२/११

१२ अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व। विवस्वन्तं हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य॥
ऋग्वेदः - १०/१४/५

वरुणवृहस्पत्यग्निभिस्सह वर्तते। अग्निः यमस्य मित्रं पुरोहितश्च प्रोक्तः। यमः पितृदेवः तस्मात् अङ्गिरसः विशेषतः सम्बन्धे स्थितः। अतः शुक्लयजुर्वेदे श्रूयते यथा -

**यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहा।**
**स्वाहा धर्माय स्वाहा धर्मः पित्रे॥**[१३]

यम इत्यस्यार्थः युगलं भवति। ऋग्वेदे क्वचिद्यमशब्दो यमलरूपेऽर्थे प्रयुक्तः, मन्यामहे अयमेवार्थः प्रथमसङ्केतितः। दृश्यते च परेताधिपतिरयं काव्यगुणाकरीभूते यमयमीसूक्ते[१४] यमलात्मकः। यमी नामात्र यमस्य स्वसा। सा भ्रातरि तस्मिन्नात्मनोऽनुरागमभिव्यञ्जयति। यमस्तु तं उपदेशवचनैः उपदिशति। यथा -

**न तिष्ठन्ति न नि मिषन्त्येते देवानां स्पश इह ये चरन्ति।**
**अन्येन मदाहनो याहि तूयं तेन वि वृह रथ्येव चक्रा॥**[१५]

यद्यप्येतत्सूक्ताभिव्यञ्जितोऽगम्यागमनरूपो वृत्तान्तः ऋग्वेदधर्मविरोधादिहप्रतिक्षिप्तः तथापि पुरावृत्तमिदं मानुष्यकसृष्टिमूलभूतस्यादिमद्वन्द्वस्य चरितमवष्टभ्य प्रवृत्तमित्यवधेयम्। तदिदं पुरावृत्तं इण्डो - ऐरेणियकालादागतं ज्ञायते। यतोह्यवस्तायामुत्तरकालिकग्रन्थेषु 'यिमेह' समाख्या यमस्य स्वसा निर्दिष्ट दृश्यते। तथा यमस्य पिता विवस्वानः अपि ऐरेणियकालादवतीर्णः। अवेस्तायां हि यिमस्य पिता 'विवन्ह्वन्त्' इति श्रूयते। स चास्माकं विवस्वतोऽभिन्न एवः॥

यमः जीवानां कर्मनिर्णयं करोति। यमदेवस्य कर्मविषये श्रूयते ऋग्वेदे यथा -

**परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम्।**
**वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य॥**[१६]

अस्यामृचि यमदेवस्य पूजनार्थं यजमानस्य कृते निर्देशं प्रतिपादितमस्ति। अर्थात् हे यजमान! सत्कर्मानुष्ठातृन् जनान् तत्कर्मभोगयोग्यप्रदेशान् नयन्तं पुण्यशीलानां स्वर्गमार्गमबाधमानं पापिनः पुरुषान् निम्नलोकं नयमानं सूर्यपुत्रं यमं सर्वेश्वरं पुरोडाशादिना हविषा पूजय। अर्थात् यः शुभकर्मकृतो जीवात्मनः कर्मफलानुसारं विभिन्नेषु लोकेषु अर्थात् स्वर्गादिस्थानं प्रापयति तादृशं यमदेवस्य कृते त्वं हविष्यान्नादिभिरर्चनीययज्ञद्रव्यैः परिचर इत्यर्थः।

सः प्रेतात्मानं प्रकाशयुतं स्थलं प्रपयति। अस्ति तत्र कश्चित् सशाखोपशाखो विशालस्तरुः। प्रच्छायशीतले यस्य मूले यमो देवैः सह सोमं पिबति। यमस्य कृते सोमरसाभिषेकः तथा घृताहुतिः

१३ शुक्लयजुर्वेदः - ३८/९
१४ ऋग्वेदः - १०/१०
१५ ऋग्वेदः - १०/१०/८
१६ ऋग्वेदः - १०/१४/१

प्रदीयते।[१७] सः स्वयमेव यज्ञस्थलम् आगत्य यज्ञभागं स्वीकरोति।[१८] तस्मात् स यज्ञकर्मणि स्तूयते। यमराजः आत्मज्ञः, सर्वज्ञः, आध्यात्मिकशास्त्रेषु निपुण इति कठोपनिषदः अनुशीलनेन ज्ञायते। प्रवर्ग्ययागस्य महावीरप्रोक्षणसमयेऽपि यमराजः स्तूयते।[१९] यमराजः त्रिकद्रुकयाग-विशेषान् रक्षति। यमः द्युपृथिव्यादिषट्स्थानानि प्राप्नोति। अपि च त्रिष्टुब्गायत्र्यादिसप्तछन्दांसि यमे निहितानि सन्ति अर्थात् ऋत्विजः एभिः इन्दोभिः यमस्य स्तुतिं कुर्वन्ति। यथा –

**त्रिकद्रुकेभिः पतति पळुर्वीरेकमिद् बृहत् ।**
**त्रिष्टुब्गायत्री छन्दांसि सर्वा ता यम आहिता॥**[२०]

उलूकः कपोतः च एतस्य दूतौ भवतः। चतुरक्षः दीर्घघोणा तथा कुक्कुरः इमे तस्य सेवकाः। ते मार्गरक्षणं कुर्वन्ति। मृतकं ते यमसमीपं नयन्ति। श्रूयते ऋग्वेदे यथा –

**यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ।**
**ताभ्यामेनं परि देहि राजन्त्स्वस्ति चास्मा अनमीवं च धेहि॥**[२१]

अर्थात् हे यम ! तव गृहस्य द्वारपालकौ विरूपाक्षौ चतुरक्षौ, मार्गरक्षकौ तथा मनुष्यैः प्रशस्यौ यौ द्वौ कुक्कुरौ स्तः ताभ्याम् इमं प्रेतात्मानं रक्ष। राजन् ! इमं कल्याणभाजं नीरोगं च कुरु, येनास्य नीचश्रेण्यां पुनर्जन्म न स्यात् इत्यर्थः।

सः प्रेतात्मानं प्रकाशयुतं स्थलं प्रापयति। तत्र बहवः वृक्षाः सन्ति। यत्र मधुरमधुरः सङ्गीतमुरलिध्वनिश्च श्रूयते। जीवस्तत्र जरामरणवर्जितः स्वच्छन्दवर्ती भूत्वा नित्यमानन्दमनुभवतीति श्रूयते ऋग्वेदे यथा –

**यस्मिन्वृक्षे सुपलाशे देवैः सम्पिबते यमः।**
**अत्रा नो विश्पतिः पिता पुराणां अनु वेनति॥**[२२]

इदं च भौतिकपिण्डयोग्यमीदृशं सुखजीवितं विसृष्टदेहस्य जीवस्य विषये, मन्यामहे, न जातु वीराणां किन्तु पुरोहितानां मनसा सृष्टं भवितुमर्हति। अत एव सङ्ग्रामेषु प्राणानर्पयतां वीराणां केवलं स्वर्गारोहणयोग्यत्वं, ऋतुषु पुरोहितेभ्यो महितानि वैतानदानानि प्रतिपादयतामुदाराणां ततोऽप्युत्कृष्ट-

---

१७ यमाय सोमं सुनुत यमाय जुहुता हविः। यमं ह यज्ञो गच्छत्यग्निदूतो अरङ्कृतः॥
यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन। इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥
- ऋग्वेदः १०.१४.१३, १४

१८ यमाय स्वाहाऽन्तकाय स्वाहा । - यजुर्वेदः ३९.१३

१९ यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे। - यजुर्वेदः ३७.११

२० ऋग्वेदः १०.१४.१६

२१ ऋग्वेदः १०.१४.११

२२ ऋग्वेदः १०.१३५.१

पदारोहणयोग्यत्वं च श्रूयते। परन्तु अथर्ववेदः पारलौकिकयातनानुभवस्थानं लोकान्तरमस्तीति प्रतिपादयति। प्रमीताः पाखण्डाः भूमेरधस्तादुपगूढमन्धं तमः प्रविशन्तीत्येतावन्मात्रं श्रूयते ऋग्वेदे। यदपि खल्वपर्याप्तं प्रमाणम्। ऋषयो हि विषयमेनमधिकृत्यात्यल्पमेव ब्रुवन्ति। उच्यमानमप्यनवधारितार्थम्। अत एव तत्रभवान् रोठाचार्योऽस्यान्धं तमः श्रुतिवाक्यस्य प्रमीतानां पाखण्डानामत्यन्तोच्छेदे तात्पर्यमित्यभ्युपैति। पारलौकिकदण्डविषयकोऽयमीदृश उपक्षेपः क्रमशः सम्प्रवृद्धो वेदकालान्तरं नानविधानां नरकविशेषाणां प्रतिपत्तौ द्वारीबभूव। एकस्मिन् मन्त्रे यमः राजारूपेण स्तूयते वरुणोऽपि। कल्याणधर्मा भुवनस्य राजावरुणः सर्वोत्कृष्टमहिमत्वेन वर्णितः ऋग्वेदे। यथा –

**प्रेहि प्रेहि पथिभिः पूर्व्यैभिर्यत्रा नः पूर्वे पितरः परेयुः।**

**उभा रजाना स्वधया मदन्ता यमं पश्यासि वरुणं च देवम्॥**[२३]

शवदाहसंस्कारसमये यमसूक्तपाठः भवति। अतः स्पष्टं यत् वैदिकयुगेऽपि शवदाहस्य प्रथा आसीत्। यतोहि अग्निः मृतकं लोकान्तरं स्थापयति। केचिद्दृङ्ग्लाः परेतानां पितृपितामहादीनां मार्गस्य देवानां मार्गादन्यत्वं प्रतिपादयन्ति। ईदृशो भेदो हवनदहनयोः भिन्नरूपत्वादुपनतो भवितुमर्हति। ब्राह्मणग्रन्थेष्वपि पितृणां देवानां च भिन्नलोकाधिवासित्वमभिप्रेत्य देवपितृलोकयोः भेदः प्रतिपादितः ॥

वैदिकवाङ्मयस्यानुशीलनेन ज्ञायते स्वपरिजनभूतैर्देवैः सह हविर्द्रव्यं, पेयञ्च गृह्णाति, अस्माकं सर्वेषां मानवानां विहितकर्मफलं जानाति, तदनरूपं दण्डविधानमपि करोतीति ॥ शम् ॥

**डॉ. शत्रुघ्नपाणिग्राही**

वेदविभागः

श्रीसोमनाथसंस्कृतविश्वविद्यालयः, गुजरातः

**सहायकग्रन्थसूची**

*शुक्लयजुर्वेद (माध्यन्दिनसंहिता – श.यु.वे.)*, सम्पा.रामकृष्णशास्त्री, वाराणसी : चौखम्बाविद्याभवन, २०१३।

*निरुक्तम् (निरु.)*, सम्पा.मुकुन्दझा, वाराणसी : चौखाम्बासंस्कृतप्रतिष्ठान,२००५।

*ऋग्वेदः*, सम्पा. रामगोविन्दशास्त्री, वाराणसी : चौखाम्बाविद्याभवन, २००७।

*शतपथब्राह्मणम् (श.ब्रा.)*, सम्पा. हरिस्वामी, दिल्ली : नागपब्लिशर्स, २००२।

उपाध्याय, बलदेव. *संस्कृतवाङ्मय का बृहद इतिहास*, लखनऊ : उत्तरप्रदेशसंस्कृतसंस्थान, १९९६।

२३ ऋग्वेदः - १०/१४/७

अङ्क- ३६
जुलाई - दिसम्बर २०२०

**वेदविद्या**
ISSN-२२३०-८९६२
UGC 'CARE' list Ind. Lang. Sl.No. 97

# वैदिकच्छन्दश्शास्त्रोपक्रमः

**डॉ. एम्.जि.नन्दनराव्**

**उपक्रमः -**

वेदवाङ्मयस्य अर्थावबोधः षडङ्गज्ञानेन विना न सम्भवति। शिक्षायाः षडङ्गाः वेदपुरुषस्य अवयवत्वेनापि प्रसिद्धाः। ते यथा -

**छन्दः पादौ शब्दशास्त्रश्च वक्रं कल्पः पाणी ज्योतिषं चक्षुषी च ।**
**शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं वेदस्याङ्गान्याहुरेतानि षट् च ॥**[1]

अत्र छन्दश्शास्त्रस्य पादत्वं स्पष्टम्। पादेन विना प्राणिनामवस्थानं न सिध्यति। पादः न केवलं स्थातुमुपकरोति अपि च गन्तुमप्युपकरोति। सुन्दरम् आकर्षकञ्च गमनं पादसौष्ठवेनैव सम्भवति। कञ्जाद्याः दोषाः गमनसौन्दर्यबाधका इति लोकादेव सिध्यति। छन्दोभिरेव समग्रवाङ्मयस्य गमनं सिध्यतीति शिष्टसम्मतः विषयः। लौकिकवाङ्मये छन्दसः प्रभावः महानिति सर्वे जानन्ति। वैदिकवाङ्मयं पूर्णतया छन्दोमयमिति प्रतिपादयितुमत्र प्रयासः क्रियते।

**छन्दश्शास्त्रस्य प्राचीनता -**

विश्ववाङ्मये ऋग्वेद एव आद्यग्रन्थ इति सर्वैरपि प्राच्यप्राश्चात्यैरङ्गीकृतो विषयः। ऋग्वेदस्य छन्दोमयत्वं सर्वविदितमेव। संस्कृतवाङ्मयस्य आरम्भकालादपि छन्दांसि सन्तीति कथनं प्रमाणान्तरानपेक्षम्।

**गद्यस्यापि छन्दोमयत्वम् -**

'छन्दः' इति कथनमात्रेण पादचतुष्टयी पद्यरचनेति भावः सामान्यतः सर्वेषु उदेति। किन्तु गद्य-पद्यद्वयमपि छन्दोमयमेवेति पूर्वतनानामभिप्रायः।

**'नाऽच्छन्दसि वागुच्चरति'**[2] **। 'छन्दोहीनो न शब्दोऽस्ति नच्छन्दः शब्दवर्जितः'**[3]**।**

१ वृद्धावशिष्ठसिद्धान्तः, मध्यमाधिकारः १-८

२ ऐतरेयब्राह्मणम्

३ नाट्यशास्त्रम्

**'गद्यं दण्डकबन्धः'**[४] इत्यपि प्राचीनैर्व्याख्यातम्। गद्यस्य छन्दोमयत्वं प्राचीनेभ्यः सम्मत एव आसीदिति ज्ञायते।

कालान्तरे लौकिकसाहित्ये पादचतुष्टयबद्धानां श्लोकानां प्रङावात् छन्दो नाम पादचतुष्टयी पद्यरचनेति भावः रूढ इति भाति।

**छन्दश्शब्दार्थविचारः -**

**'चन्द्र आह्लादने दीप्तौ च'**[५] इति धातुतः 'छन्दति ह्लादं करोति छन्दः' इति हर्षटः प्रत्यपादयत्। 'छन्दः छादनात्' इति यास्कवचनम्।

गार्ग्यमहर्षिणा वेदाख्यानं किञ्चित् अस्मिन् सन्दर्भे स्मारितम्।

**यस्माच्छादिता देवाश्छन्दोभिर्मृत्युभीरवः। छन्दसां तेन छन्दस्त्वं ख्यायते वेदवादिभिः ॥**

**यथा छन्दोभिराच्छन्नान् देवान् मत्स्यानिवोदके । सह्यपश्यत्पुरामृत्युरमृतत्त्वं ततो गताः**[६] **॥**

मृत्युभीताः देवाः गायत्र्यादिच्छन्दः शरणं गताः। तदा जलेषु मत्स्या इव देवाः छन्दोभिः आच्छादिताः अभवन्। छन्दोभिराच्छादितान् देवान् मृत्युः अन्वेष्टुं नाशक्नोदिति वेदाख्यानस्य सारः।

**छन्दोभेदाः -**

छन्दांसि वैदिकलौकिकभेदेन द्विधा। वैदिकच्छन्दस्सु पादव्यवस्थायाम् असारसंख्यायाः प्राधान्यम्। लौकिकच्छन्दस्सु गणच्छन्दांसि, मात्राछन्दांसि च वर्तन्ते।

**वैदिकच्छन्दसाम् अष्टप्रकाराः -**

वैदिकच्छन्दांसि अष्टनर्गेषु विभक्ताः - ते च दैवी-आसुरी-प्राजापत्या-आर्षी-याजुषी-सम्नी-आर्ची-ब्राह्मी[७] । पुनः प्रत्येकस्मिन्नपि सप्तवर्गाः वर्तन्ते। ते - गायत्री-उष्णिक्[८]-अनुष्टुप्-बृहती-पक्तिः-त्रिष्टुप्-जगती च। आर्षीछन्दस्सु एव एकैकस्मिन् मन्त्रे नियमेन पादचतुष्टयं भवति।

४ श्रीरस्वामिव्याख्यानम्, अमरकोशः

५ परस्मैपदी (१ गणः २७७)

६ उपनिषदानसूत्रम् गार्ग्यः

७ पिङ्गलच्छन्दः सूत्रम् २-१४

८ पिङ्गलच्छन्दः सूत्रम् ३-१२

**श्रीहलायुधभट्टविरचितं चतुःषष्टिकोष्ठात्मकं मण्डलम्**

| | | गायत्री | उष्णिग् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|---|
| १ | आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| २ | दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ |
| ३ | आसुरी | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| ४ | प्राजापत्या | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| ५ | याजुषी | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| ६ | साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| ७ | आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| ८ | ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

यजुर्वेदस्य दीर्घवाक्यानि प्रगाथाछन्दांसीति प्रसिद्धानि। प्रगाथ्यते सम्मेल्यते छन्दसा छन्द इति प्रगाथा इति निर्वचनं प्रातिशाख्यग्रन्थेषु प्रदर्श्यन्ते।

**आर्षीवर्गछन्दसां स्वरूपम् -**

गायत्र्यादिछन्दस्सु सप्तविभागाः एव भवन्ति। किन्तु आर्षीवर्गे २६ प्रकाराः भवन्ति। ते समुदायचतुष्टयेषु विभक्ताः। (१) प्राग्गायत्रीछन्दांसि, (२) बृहच्छन्दांसि, (३) अतिछन्दांसि, (४) कृतिछन्दांसि इति।

**(१) प्राग्गायत्री -**

प्राग्गायत्र्यां मा, प्रमा, प्रतिमा, उपमा, संमा[९] इति भेदाः वर्तन्ते। .

**(२) बृहच्छन्दांसि -**

गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्तिः , त्रिष्टुप्, जगतीति भेदाः वर्तन्ते।

**(३) अतिछन्दांसि -**

अतिजगती, शक्करी, अतिशक्करी, अष्टि, अत्यष्टि, धृति, अतिधृति[१०] इति भेदाः।

**(४) कृतिछन्दांसि -**

कृतिः, प्रकृतिः, आकृतिः, विकृतिः, सङ्कृतिः, अभिकृतिः, उत्कृतिरिति[११] भेदाः वर्तन्ते।

---

९ पिङ्गलच्छन्दः सूत्रम् ३-१३

१० पिङ्गलच्छन्दः सूत्रम् ४-५, ६, ७

११ पिङ्गलच्छन्दः सूत्रम् ४-१, २, ३, ४

वैदिकछन्दस्सु आर्च्या प्रतिप्रभेधेऽपि शङ्कुमती[१२], ककुद्मती[१३], पिपीलिकमध्या[१४], यवमध्या[१५], नागी[१६], वाराही[१७] इत्याद्याः अवान्तरभेदाः वर्तन्ते। .

आर्षीय षड्विंशतिप्रभेधेष्वपि निचृत्, भुरिक्[१८], विराट् स्वराडिति[१९] उपभेदाः वर्तन्ते।

**निचृत् -**

पादचतुष्टयं मिलित्वा या संख्या भवितव्या तदपेक्षया एकाक्षरं न्यूनं चेत् तत् तस्य छन्दसः निचृत् भेदः इति गणनीयम्।

**भुरिक् -**

पूर्वोक्तविधानेन एकाक्षराधिक्ये तस्य छन्दसः भुरिक् प्रभेध इति ज्ञातव्यम्।

**विराट् -**

पूर्वोक्तविधानेन अक्षरद्वये न्यूने तस्य छन्दसः विराट् प्रभेधेति ज्ञेयम्।

**स्वराट् -**

पूर्वोक्तविधानेन अक्षरद्वयाधिक्ये तस्य छन्दसः स्वराट् भेद इति ज्ञातव्यम्।

**उदाहरणार्थम् -**

आर्षीगायत्रीछन्दसि षडक्षराणां पादचतुष्टयं भवति। एवं चतुर्विंशत्यक्षराणि भवन्ति। आर्षी-निचृद्गायत्र्यां त्रयोविंशत्यक्षराणि भवन्ति। आर्षीभुरिग्गायत्र्यां पञ्चविंशत्यक्षराणि, आर्षीविराड्गायत्र्यां द्वाविंशत्यक्षराणि, आर्षीस्वराड्गायत्र्यां षड्विंशत्यक्षराणि भवन्ति।

**सन्देहस्थानेषु निर्णयः -**

कस्मिन्नपि छन्दसि अक्षरद्वयाधिक्ये स्वराडिति अक्षरद्वयस्य ह्रासे विराडिति ज्ञातव्यमित्युक्तम्। इदानीं चतुर्विंशत्यक्षराणाम् आर्षीगायत्र्याम् अक्षरद्वयाधिक्ये स्वराड्गायत्रीति मन्तव्यम्। तथैव आर्षी - उष्णिक्छन्दसि अक्षरद्वयं न्यूनं भवति चेत् विराडुष्णिक् छन्दः भवति। तदापि षड्विंशत्यक्षराणि

१२ पिङ्गलच्छन्दः सूत्रम् ३-५५
१३ पिङ्गलच्छन्दः सूत्रम् ३-५६
१४ पिङ्गलच्छन्दः सूत्रम्
१५ पिङ्गलच्छन्दः सूत्रम्
१६ पिङ्गलच्छन्दः सूत्रम्
१७ पिङ्गलच्छन्दः सूत्रम् ३-१३
१८ पिङ्गलच्छन्दः सूत्रम् ३-५९
१९ पिङ्गलच्छन्दः सूत्रम् ३-६०

भवन्ति। एवम् उभयोरपि षड्विंशत्यक्षराण्येव चेत् तत् किं छन्दः स्यादिति सन्देहः उदेति। तत्र आचार्य पिङ्गलेन द्विविधपरिहारः[२०] सूचितः।

(१) छन्दसः प्रथमपादः यदि गायत्रीछन्दः तर्हि स्वराड्गायत्रीति मन्तव्यम्। यदि प्रथमपादः उष्णिक् तर्हि विराडुष्णिगिति निर्णयम्।

(२) पूर्वोक्तस्थले सन्देहवारणार्थं पिङ्गलाचार्यः उपायान्तरं निर्दिशति। सन्दिग्धे छन्दसि अग्निदेवतायाः उल्लेखः अस्ति चेत् तत्र गायत्रीति, सवितृदेवतायाः उल्लेखः अस्ति चेत् तत्र उष्णिगिति निर्णयः करणीयः।

**देवतादितश्च**[२१] इति सूत्रे पिङ्गलाचार्येण अयं विचारः उक्तः।

**उपसंहारः -**

लौकिकवाङ्मये छन्दश्शास्त्रं महावृक्षवत् प्रवृद्धं दृश्यते। अस्य महावृक्षस्य बीजं वेदवाङ्मयमेव इति मन्तव्यम्। वेदेषु छन्दसां परिमितिः वर्तते। लोके तु अपरिमितानि। वाङ्मयसौष्ठवं छन्दोभिरेवेति सर्वार्थसिद्धिः।

**डॉ. एम्.जि. नन्दनराव्**

असिस्टेंट प्रोफेसर, अनुवादविभागः

राष्ट्रीयसंस्कृतविद्यापीठम् तिरुपतिः

mnandanbhatt@gmail.com

मोबा. 8500563074

२० पिङ्गलच्छन्दः सूत्रम् ३-६१

२१ पिङ्गलच्छन्दः सूत्रम् ३-६२

अङ्क- ३६
जुलाई - दिसम्बर २०२०

वेदविद्या
ISSN-२२३०-८९६२
UGC 'CARE' list Ind. Lang. Sl.No. 97

# वेदाङ्गेषु ज्योतिर्विज्ञानम्

**बृजमोहनः**

अस्य जगतः सर्वेषां विषयाणां ज्ञानं वेदेषु विद्यमानोऽस्ति। वेदमन्त्राणां ज्ञानस्य विस्तारः ब्राह्मणग्रन्थेषु अभवन्। आरण्यकोपनिषद्वेदाङ्गदर्शनपुराणसाहित्यग्रन्थाणां विपुलरूपे वैदिकज्ञानस्य विस्तारः अभवन्। यतो हि सर्वेषां प्रकाराणां ज्ञानस्य मूलः वेदेषु निहितोऽस्ति। अतः ज्योतिषशास्त्रस्य मूलोद्गमोऽपि वैदिकमन्त्रेषु ब्राह्मणग्रन्थेषु च प्राप्यते। अध्ययनानन्तरं ज्ञायते यत् केन प्रकारेण ज्योतिषस्य मूलं वैदिकमन्त्रेषु प्राप्यते।

ततः किं नाम ज्योतिषम् ? अपरिमिते गगनमण्डले यानि हि तेजोमयानि बिम्बानि दृश्यते तानि सर्वाण्येव समष्ट्या ज्योतिः शब्देनोच्यन्ते। एवं विध ग्रहतारादिकादिज्योतिः पिण्डानां स्थिति गतिप्रभावादि वर्णनपरं शास्त्रमेव ज्योतिषपदेनाभिधीयते। तदिदं शास्त्रं व्यवहारशास्त्रत्वेन समाद्रियते जनैः। व्यवहारेऽस्योपयोगो बहुमुखः। ग्रहाणां कालावस्थागत्यादिनिर्देशेन कर्मसम्पादनं निमित्तकमुहूर्तादि कथनेन शुभाशुभफलकथनेन चेदं शास्त्रं जनान् प्रत्यक्षमेवोपकरोतीति। शास्त्रदृष्ट्या व्यवहारदृष्ट्या चोपयोगित्वेननैवेदं वेगोषु मूद्धन्यत्वेन स्मर्यते। यथोक्तं -

**यथाशिखमयूराणां नागानां मणयो यथा। तद्वद्वेङ्गाशास्त्राणां ज्योतिष मूर्ध्नि संस्थितम्।**

मुहूर्तज्ञानं दिग्ज्ञानं तिथिवारादिज्ञानञ्च ज्योतिषशास्त्रादेव भवति। येन विना व्यवहार एवं न सिद्ध्यतीति स्पष्टमेवापरिहार्यताऽस्य व्यवहारे। तेनैवोक्तं स्यात् -

**अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम्। प्रत्यक्षं ज्योतिष शास्त्रं चन्द्रार्कौ यस्य साक्षिणौ।**

वेदनिर्गतमपि शास्त्रमिदं स्वातन्त्र्यमर्त्याधकरोति येनाऽस्य शास्त्रत्वं मुक्षुण्णं वर्तते। ग्रहण विषये ग्रहस्थिति विषये पृथ्वीस्वरूपगतिविषये चास्य मौलिका अपि सिद्धान्ताः। तदिदं शास्त्रोपकारक-जगद्व्यवहार। प्रवर्तकञ्च ज्योतिषाख्यं शास्त्रम्। ग्रहादिगतिस्थितिप्रभावादिशासनादस्य शास्त्रत्वम-क्षुण्णमिति। ज्योतिषशास्त्रस्य मूलभूतसिद्धान्तमस्ति यत आकाशीयपिण्डाः सम्पूर्णब्रह्माण्ड प्रभावयति। इत्यनेन प्रकारेण इत्येषां ग्रहनक्षत्राणां प्रभावः मानवोपरि अपि प्रभवति। अपरशब्देषु आकाशीयपिण्डेषु एवं मानवेषु पारस्परिकसम्बन्धः अस्ति। सम्बन्धेऽस्मिन् अथर्ववेद प्राप्यते -

**चित्राणि साकं दिवि रोचनानि सरीसृपाणि भुवने जवानि।**
**तुर्मिशं सुमतिमिच्छमानो अहानि गीर्भिः सपर्यामिनाकम्॥**

**यानिनक्षत्राणि दिव्यन्तरिक्षे अप्सु भूमौ यानि नगेषु दिक्षु।**
**प्रकल्पयश्चन्द्रमा यान्येति सर्वाणि ममैमानि शिवानि सन्तु॥**

**अष्टाविंशति शिवानिशग्मानि सहयोगं भजन्तु मे।**
**योगं प्रपद्ये क्षेमं च क्षेमं प्रपद्ये योगं च नमोऽहोरात्राभ्यामस्तु॥**

उपर्युक्त तृतीय मन्त्रे यत् अहोरात्रपदमासीत् तस्य ज्योतिषशास्त्रस्य होराशास्त्रे अत्यन्तं महत्त्वं वर्त्तते।

**अहोरात्राद्यन्तलोपाद्धोरेति प्रोच्यते बुधैः।**
**तस्य हि ज्ञानमात्रेण जातकर्मफलं वदेत्॥**

आकाशीयपिण्डेषु नक्षत्रग्रहश्चोभयः वर्तते। ज्योतिषेन एतयोः द्वयोः मध्ये किञ्चित अन्तरं कृत्वान्। यथोक्तम् -

**तेजः पुञ्जा नु वीक्ष्यन्ते गगने रजनीषु ये।**
**नक्षत्रसंज्ञकास्ते तु न क्षरन्तीति निश्चलः॥**

**विपुलाकारवन्तोऽन्ये गतिमन्तो ग्रहाः किल।**
**स्वगत्या भानि गृह्णन्ति यतोऽतस्ते ग्रहाभिधाः॥**

उपर्युक्तः वर्णितः त्रिषु मन्त्रेषु नक्षत्रेभ्यः सुखः सुमति, योगक्षेमस्य प्रार्थना कृताः। अधुना ग्रहेभ्यः अस्य प्रकारस्य प्रार्थनायाः वर्णनमस्ति **'शंनो दिविचरा ग्रहाः'** वर्तते। अर्थात् आकाशे भ्रमणशीलाः सर्वे ग्रहाः अस्माकं कृते शान्तिदायकं भूयात्। ज्योतिषशास्त्रस्य आर्षग्रन्थः सूर्यसिद्धान्तः मन्यते। सूर्य सिद्धान्तस्य मूलनियमानां ज्ञानं वेदेषु विधीयते। शून्यतः परार्धपर्यन्तं गणितीयाकानां वर्णनं, पृथिव्याः आकृतिगतिश्चा, संवत्सर द्वादशमासाश्च, षड्ऋतवः तथा सप्तचक्राणां चर्चा, अयनगति, युग कल्पश्च, धूमकेतुः एवं पुच्छलतारादि, अनेकज्योतिषस्य मूलं तत्त्वं वैदिकसाहित्ये विधीयन्ते।

उत्तरीध्रुवतः 90 दक्षिण एवं दक्षिणी ध्रुवतः 90 उतर कल्पित वृतः विषुवदवृतः कथयते। विषुवद्वृततः 24 उतर 24 दक्षिणश्च 48 अंशस्य वृतं क्रान्तिवृतं कथयते। वयं विषुवदवृततः उपरि निवसामः। अतः दृश्यमण्डलस्यानुसारे दक्षिणमार्गः लघुतमः वर्तते। एवमेव कारणमस्ति यत् यदा सूर्यः दक्षिणस्य परम क्रान्तौ गच्छति तर्हि दिवसः लघुतमः भवति। एतादृशकार्ये उत्तरस्य परं क्रान्तौ यदा आयाति तदा दिवसः बृहतमः भवति। यतोहि दक्षिणमार्गस्य मध्यमार्गः गुरुतरः। मध्यममार्गतः उत्तरमार्गः गुरुतरः, अतः अस्य लघु, बृहत् रहस्यं कथनस्य कृते एतान् चीन भागानां क्रमशः वैश्वानर, जरद्गवः एवं ऐरावत इति नामस्थापितः यथा -

**तद्धैकेऽजमुपबध्नन्ति। अग्नेयोऽजः। अग्नेरेव सर्वत्वायेति वदन्तः।**

एतदर्थं कथनाय एषां भागानां नामः ऐरावतादि स्थापित्वान्। एतेषु त्रिषु मार्गेषु प्रत्येकस्मिन् मार्गे तिस्रः तिस्रः विथ्याः सन्ति। सर्वेग्रहाः वीथियुक्ताः वैश्वानरादि त्रिषु मार्गेषु अवलम्बिता सन्ति। येन प्रमाणेन विथिनां रहस्यस्य प्रतिपादनमभवन्। एतासां वीथिनां संहिताग्रन्थेषु ग्रहाचारस्यसन्दर्भ तथा मुहूर्त प्रकरणे त्रिनाड्या स्वरूपे विस्तारं दृश्यते। अहोरात्रवृतानां वैज्ञानिकव्याख्यायाम् अभाष्यत् यत् विषुवदतः क्रान्तिवृतस्य 24 अंशेषु समान अंशेषु त्रयः पूर्वापर वृतानि उत्तरे तथा त्रयः पूर्वापरवृतानि दक्षिणे भवन्ति। एतानि सप्त पूर्वापरवृतानि भवन्ति।

एतानि सप्त पूर्वापरवृतानि अहोरात्र वृतः कथ्यते। वेदेषु एतेषां नामानां छन्दसः सन्ति। तानि नामानि यथा सन्ति -

**गायत्र्युष्णिगनुष्टुबृहतीपङ्क्तिस्त्रिष्टुब्जगत्यश्छन्दांसि॥**

यः गायत्री छन्दः अस्ति तं ज्योतिषजनाः मकरवृतः कथ्यन्ते। एवं जगती छन्दं ज्योतिषि कर्कवृतः कथ्यन्ते। एवमेव सूर्यस्य सप्ताश्वाः सन्ति। प्रकृतिमण्डलस्यानुसारं भगवत् सूर्यः बृहती छन्दे स्थिररूपे ऊष्णं भवति। यथा - **'सूर्यो बृहतीमध्यूडस्तपति'** यदा सायन सूर्यः मिथुन राश्यां प्रविशति तदा अस्माकं भूमण्डले बृहदतमः ग्रीष्मः भवति। अतः तं वृतं उष्णिकछन्दः कथ्यते। यं वस्तु वर्तल लघुवतं भवति तस्य मध्यस्थानमेव बृहदतमः भवति। अतः बृहदतमं वृतस्य नाम बृहती निष्पादितः।

वेदेषु सूर्यस्य आकर्षणस्य बलोपरि आकाशे नक्षत्राणं स्थितिनां वर्णनं प्राप्यते। यथा -

**तिस्रो द्यावः सवितुर्द्वा उपस्थां एका यमस्य भुवने विराषाट्।**
**अणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु य उ तच्चिकेतत्॥**

सूर्यमेव रात्रिदिवसयोः कारणं भवति। यथा -

**आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यंच ।**
**हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्॥**

चन्द्रमसः विषयेऽपि वेदेषु पर्याप्तज्ञानं प्राप्यते। यथा -

**अत्राह गोरमन्वतनाम त्वष्टुरपीच्यम् इत्था चन्द्रमसो गृहे।**

चन्द्रमाः गगने गतिमानः वर्तते। अयं नित्यगतिशीलं वर्तते। यथा -

**चन्द्रामा अप्स्वन्तरा सुपर्णो धावते दिवि।**
**न वो हिरण्यनेमयः पदं विदन्ति विद्युतो वित्तं मे अस्य रोदसी॥**

वेदस्य नयनं ज्योतिषशास्त्रं कथ्यते। नेत्राभ्यां बिना यथा कोऽपि मानवः स्वयमेव पदात्पदमपि चलितुं न शक्नोति तद्वत् ज्योतिषशास्त्रं बिना वेदपुरुषस्यान्धता समापतिष्यति। वेदस्य प्रवृतिर्विशेषेण यज्ञसम्पादनाय भवति। यज्ञस्य च विधानं विशिष्टकालानामपेक्षा स्थापयति। यज्ञ-याग-सम्पादनाय समयशुद्धेर्महती आवश्यकी भवति। कानिचित् कर्मकाण्डविधानानयेतादृशानि सन्ति। येषां सम्बन्धः

सम्वत्सरेण भवति। कस्यचित् ऋतुना। एतदुदाहरणञ्च यथा- तैत्तिरीयब्राह्मणस्य कथनमस्ति - 'वसन्ते ब्राह्मणोऽग्निमादधीत' ग्रीष्मे राजन्य आदधीत। शरदि वैश्य आदधीत। सामवेदे कतिपयस्य यज्ञस्य सम्पादनं विशिष्टपक्षेषु च प्राप्यते।

अत्रायमाशयो यत् सुचिन्तितरूपेण नक्षस्य, तिथेः, पक्षस्य, मासस्य, ऋतोः, सम्वत्सरस्य च कालस्य समस्तखण्डैस्सह यज्ञ-यागस्य विधानं वेदेषु प्राप्यते। तत्रैव महती प्रतिष्ठा। तस्मादेतेषां नियमानां परिपालनाय यथार्थरूपेण निर्वाहाय च ज्योतिषशास्त्रस्य ज्ञानं नितान्तमावश्यकमस्ति। उपादेयता च तत्रैव सिद्ध्यति। यो जनः ज्योतिषं सम्यक्तया विजानाति स एव यज्ञस्य यथार्थरूपेण ज्ञानं दधाति। यथोक्तम् -

**वेदा हि यज्ञार्थमभिप्रवृताः कालाभिपूर्वा विहिताश्च यज्ञाः।**
**तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञम्॥**

ज्योतिषं वेदस्य विशिष्टांगमस्ति वैदिकयज्ञविधानाय ज्योतिषस्य महन्महत्त्वं स्वीकृत्य ज्योतिषमार्तण्डेन सुविख्यातेन भास्कराचार्येण स्पष्टमुद्घोषितं -

**वेदास्तावद् यज्ञकर्मप्रवृता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।**
**शास्त्रादस्मात् कालबोधो यतः स्यात् वेदाङ्गत्वं ज्योतिषस्योक्तमस्मात्॥**

ज्योतिषशास्त्रस्येतिहासे एष उल्लेखो प्राप्यते यत् - पुराकाले चतुर्णामपि वेदानां पृथक्-पृथक् ज्योतिषशास्त्रमासीत्, तेषु (अधुना) सामवेदस्य ज्योतिषशास्त्रं मे नोपलभ्यते। अविशिष्टानां त्रयाणामितरेषां वेदानां ज्योतिषाणि प्राप्यन्ते, तद्यथाक्रमेण -

1. ऋग्वेदस्य ज्योतिषम्-आर्च ज्योतिषम्।
2. यजुर्वेदस्य ज्योतिषम्-याजुष ज्योतिषम्।
3. अथर्ववदस्य ज्योतिषम्-आथर्वणज्योषिम्।

॥इति॥

**बृजमोहनः**
शोधच्छात्रः (ज्योतिषविभागः)
श्री ला.बा.शा.रा.सं. विद्यापीठम्
नवदेहली -110016

**सहायकग्रन्थसूची -**

*ऐतरेयब्राह्मणम् (ऐ.ब्रा.)*, सम्पा.सत्यव्रतसामश्रमी, कोलकाता : १८९५।

*अथर्ववेदः*, सम्पा.दमोदरसातवलेकरः, वलसाड : स्वध्यायमण्डलः, १८६५।

शास्त्री, नेमिचन्द. *भारतीय ज्योतिष*, नई दिल्ली : भारतीय ज्ञानपीठ, २००९।

प्रसाद, गोरख. *भारतीय ज्योतिष का इतिहास*, लखनऊ : उत्तरप्रदेश सरकार, १९३५।

अङ्क- ३६
जुलाई - दिसम्बर २०२०

**वेदविद्या**
ISSN-२२३०-८९६२
UGC 'CARE' list Ind. Lang. Sl.No. 97

# यज्ञे मन्त्रविनियोगान्तर्गततत्त्वानां विचारः

**डॉ. शम्भुनाथमण्डलः**

यज्ञशब्दो यज् धातोः नङ् प्रत्यये निष्पन्नः।[१] यज् धातोः त्रिधा प्रयोगो दृश्यते यथा - देवपूजा, सङ्गतिकरणम्, दानश्चेति। यज्ञेषु प्रामुख्येन देवताः, मन्त्रास्तथा हविर्द्रव्यनाम् । वस्तुतः देवता यज्ञस्य सर्वप्रथमतत्त्वम्। यज्ञे देवतायाः नानाविधोपासनामाध्यमेन अनुग्रहः प्राप्यते। परन्तु मूलतः देवता यजमानस्य उद्देश्यप्राप्त्यर्थम् एकमाध्यममात्रं तथापि तत्र माध्यमं सर्वाधिकं महत्त्वपूर्णम्। यज्ञोद्देश्यभेदात् प्रत्येकयज्ञे मुख्यदेवता भिन्ना, एका अथवा अनेकभूता। सहस्रवर्षे जनजीवनस्य नैकासु धारासु यज्ञानां विविधविधयः प्रारम्भन्ते। परन्तु यज्ञविषयकज्ञानं ज्ञातुः अत्यन्तदुः साध्यं प्रतीतम्। वैदिकयज्ञस्य गहनता अस्ति परन्तु अधिक-जटिलता अनुभूयते।[२] जटिलता न कर्मकाण्डलिप्तविधिविषये अपितु विधिसम्पृक्त विनियुक्त-मन्त्रस्य कठिनता अस्ति। सामान्यक्रियायाः मन्त्रपूर्वकं यज्ञानुष्ठानं करणीयं, एतदेव यज्ञस्य सर्वप्रमुखं वैशिष्ट्यम्। सुतरां कर्म मन्त्रविनियुक्तः - एतद् निदर्शनं सूत्रग्रन्थे दरीदृश्यते। किन्तु मन्त्रस्य विनियोगः कः ? एतद्विषये ब्रह्मणग्रन्थेषु उपलभ्यते। यज्ञस्य व्यापकता, क्रियायाः बहुलता, ब्रह्मणव्याख्यानस्य विविधता कारणेन विनियोगस्य स्वरूपं एकं नास्ति।[३]

ब्रह्मणानुसारं यज्ञकर्म, मन्त्रार्थं च एकरूपता विनियोगस्य मूलाधारः । महीदासेन[४] एकरूपता इत्यस्य पदस्य *'यज्ञ वै रूपसमृद्धिः'* पारिभाषिकार्थे "एतद्वै यज्ञस्य समृद्धं यत्रूपसमृद्धं यत्कर्म क्रियामाणमृगभि- वदति" उल्लिखितम्। गोपथब्रह्मणे[५] अस्य पदस्य ऋग्-यजुष् सम्पृक्तेन अधिकव्यापकं व्यपदिष्यति। तत्र उल्लेखनीया परिभाषा अन्यब्रह्मणग्रन्थे नोपलभ्यते। इमं परिभाषानुसारं रूपसमृद्धः विनियोगस्य प्राथमिकस्वरूपं क्रियाया अनुवादकमन्त्रः। यथा

१.क. यज्ञशब्दो यज् देवपूजासङ्गतिकरणदानेषु इति। पा.धा., १.७२८,

ख. देवपूजाद्यर्थकाद् यजधातोः यजयाचयतविच्छप्रच्छरक्षो नङ् इति पाणिनीयलक्षणाद् भावे नङ् प्रत्यये भूत्वा प्रसिद्ध्यति। अष्टा., ३.३.९०

२. मै.सं., पृ. २८७

३. मै.सं., पृ. २८७

४. ऐ.ब्र., १.१.४

५. गो.ब्र., २.२.३

पुरोडाशप्रदानसमये,[६] अग्न्याधानसमये[७] अग्निस्तुतिः, दीक्षा-स्नानकाले आपोदेवी शुद्धिकरणे मन्त्रोच्चारणं दृशे।[८]

किन्तु *गार्हपत्याग्नेः पूजनम्*[९], *देवानां परिषूतमसि*[१०], *देवानां वह्नितम्*, *विष्णो क्रमोऽसि*[११], इत्यादि विनियोगे उपलभ्यते परन्तु मन्त्रे उल्लेखं नास्ति। तदर्थं क्रियायाः रूपसमृद्धः प्रकाशयति। क्रियमाणं कर्म अर्थात् कर्ममात्रवाचकं नास्ति, अपितु कर्मसम्बन्धित-संज्ञा, वस्तुसंकेतित ज्ञानं ज्ञापयति। एव प्रकारेण रूपसमृद्धः शब्दस्य स्पष्टस्वरूपं विदधाति।

तै.संहितायां[१२] *'रूपसमृद्धिः'* इत्यस्य शब्दस्य प्रयोगम् अग्निचितियागे उखापात्रनिर्माणकाले दृश्यते। मै.संहितायां रूपसमृद्धः शब्दस्य प्रयोगः नैवोपलभ्यते। किन्तु 'रूपम्'[१३] शब्दस्य बहुधा व्याख्यानं परिलभ्यते। शतपथब्राह्मणे[१४] रूपम् शब्दस्य प्रयोगं दरीदृश्यते। रूपसमृद्धः शब्दः द्विविधः। प्रथमतः अश्वमेधयागे वस्त्र-दक्षिणा रूपसमृद्धः इत्युच्यते। द्वितीयतः अस्मिन् यागे प्रधान-अश्वविशेषः औचित्यनिर्माणे रूपसमृद्धः परिलभ्यते ।[१५] तै.संहितायां[१६], शतपथब्रह्मणे[१७] 'रूपसमृद्धः' शब्दः मन्त्रः-क्रियायाः च सङ्गतिकरणं न विदधाति, परन्तु यज्ञविधेः,यज्ञोपकरणस्य च विशिष्टता प्रतिपादिता। रूपम् शब्दः प्रायशः प्रयोजनानुसारेण मन्त्र-क्रियायाः च सम्बन्धस्थापनमाध्यमेन फल-प्राप्तिः अर्हति। यथा *इषे त्वा*[१८] मन्त्रांशे पलाश या

६. उरु प्रथस्वो, उरु ते यज्ञपतिः प्रथताम् । तै.सं., १.१.९२०

७. ममाग्ने वर्चो विहवेस्तु वयं वे न्धानास्तन्वं पुषेत्।
णह्यं नमत्तां प्रदिशश्चतस्त्रस्त्व या ध्यक्षेण पृतना जयेम॥ तै.सं., १.४.१.१

८.क) हिरण्यवर्णाः शुचयः पावकाः प्रयुक्तमुरिहित्वावद्यमापः। तै.स., १.२.१.४
ख) आपो मा मातरः सूचयन्तु घृतेन मा घृतध्वः पुनन्तु।
विश्वं हि रिप्रं प्रवहन्तु देवीरुदिदाभ्यः शुचिरा पुनः एमि॥ तै.सं., १.२.१.५

९. मै.सं., ४.१.२; मा.श्रौ.सू., १.१.१.२४

१०. तै.स., १.१.२.४

११. तै.स.,१.१.५.१२

१२. शमीशाखाया वस्त्रनपाकरोति शत्यै, पाविनो कार्या, पशूनां वा एतद्रूपं पशुमान भवति।
तै.स., ४.१.१.; शत.ब्र., १३.४.२.४

१३. मै.सं., ४.१.१

१४. शत.ब्र., १.३.४.१५

१५. मै.स., १.४.२.४

१६. तै.सं., ४.२.१.२

१७. शत.ब्र., १३.४.२.४

१८. तै. सं., १.१.१.१

शमीशाखाछेदनकरणे मन्त्रस्य महत्त्वप्रतिपादने ब्रह्मणग्रन्थे- यज्ञे, यज्ञपतिः अन्नं बलं च स्थापनं अर्जयति। पात्र-प्रक्षालने *शुन्धध्वं देव्याय कर्मणा।*[१९]

ब्राह्मणे मन्त्रगतशब्दो न केवलं कार्यस्य सम्बन्धं स्थापयति, अपितु शब्दः क्रियायाः च प्रयोजनं ज्ञापयति। ब्राह्मणे रूपसमृद्धः अर्थात् कार्यं सुसम्पन्नं प्रतीयते। परन्तु तै.संहितायाः अथवा मै. संहितायाः उद्धरणेन सह स्पष्टतापूर्वकं प्रतिस्थापयति। किन्तु ब्रह्मणे उपयुक्त-परिभाषायाम्- यत्र यज्ञस्यानुरूपं क्रियते तद् यजमान ऋध्नोति। उक्रामोदक्रमीदित्यनुरूपं वा एतत् क्रियते यज्ञस्यावरुध्यै। परन्तु *उत्क्रामः, उदक्रमीत्,* द्वयो शब्दो[२०] यदि विनियोगस्य सार्थकता प्रतिपादने यज्ञानुरूपं करणीयं, तदर्थं यजमानसमृद्धिः प्राप्नोति। अतः क्रियावाची शब्दयुक्तमन्त्रः यज्ञप्रत्यये विज्ञायते।

अतः उपरि विवरणात्मकं व्याख्यानेन ज्ञापयति यत् – मन्त्र-क्रियाया च सामञ्जस्यभावं रूपसमृद्धिः नाम देदीप्यते। तदर्थं तै.संहितायाः मन्त्र-विनियोगस्य वर्गीकरणं करणीयम्। प्रधानत रूपसमृद्धत्मकं विनियोगः त्रिविधः। यथा- १. अर्थप्रधानतत्त्वम् ( अर्थप्रधानं त्रिविधम्, यथा- क्रियासाम्याधारितम्, वर्णसाम्याधारितम्, विशिष्टार्थम्), २. भावाश्रित-तत्त्वम्, ३. प्रतीकश्रित-तत्त्वम्

## अर्थप्रधानतत्त्वम्

इदं तत्त्वं मन्त्रस्य सरल-सामान्यर्थस्य प्रामुख्यं प्रतिपादयति। रूपसमद्ध अनुसारेण कर्म करणीयम्। परन्तु करणीयकर्मणः विषयः उपस्थापयति मन्त्रः। अतः यज्ञक्रियायाः मन्त्रक्रियायाः च समानताया प्रतिस्थापनं विनियोगस्य मूलस्वरूपम्। यथा पुरोडाशप्रदानकाले उरु प्रथस्व मन्त्रोच्चार्यते।[२१] दीक्षा-स्नानकाले जलेन शुद्धिकरणं मन्त्रोच्चारणं,[२२] वेदि-पाश्ववर्ती स्थले – संन्नहनं- ग्रन्थि-ग्रश्नातु-उद्यछे-हरामि, सादयामि क्रियाया मन्त्राः व्यवह्रियते,[२३] एतद् क्रिया-साम्याधारेण विनियोगम् क्रिया-साम्यं अन्तरं वर्णनं साम्यं अर्थात् यो वस्तुः यज्ञोपकरणे सम्भारग्रहणं, स्पर्शं वा अभिमन्त्रणं क्रियते, मन्त्रे वस्तुनः स्तुतिः हूयते। यद्यपि मन्त्रे ग्रहणं, स्पर्शं वा अभिमन्त्रणं क्रियाया उल्लेखः नास्ति। यथा *गोषदसि*[२४] *गार्हपत्यग्नेः पूजनम्, देवानां परिषूतमसि*[२५], अर्थात्

१९. मै.सं., ४.१.३
२०. तै.स., ३.१.४
२१. तै.स., १.२.१.४-५
२२. तै.स., १.१.२.६
२३. तै.स., १.१.९.२०
२४. तै.सं., १.१.२.२
२५. तै.स., १.१.२.४

*छेदनयोग्यवर्हिः निर्धारणम्, देवानां वह्नितमं सस्नितम्*[२६] ............*हविर्धानं शकटेन सह* स्पर्शम्, *आदित्यास्त्वगसि*[२७] अर्थात् *कृष्णाजिनग्रहणम्, पृथुग्रावसि वानस्पत्यः*[२८], *बृहद् ग्रावासि वानस्पत्यः* अर्थात ऊलुखल-मुसलस्य ग्रहणम्- इत्यादिषु मन्त्रेषु तत्तत् क्रियाया नास्ति। किन्तु वस्तु-सम्बन्धितं कार्यं इत्युच्यते। मन्त्रे कोऽपि वस्तुसम्बन्धे वर्णनं अभीष्टम्। अतः वर्णनसाम्यं स्पष्टतः रूपसमृद्धिः।

परन्तु उपयुक्तद्विविधस्वरूपं रूपसमृद्धिः ब्रह्मणे बहुधा मन्त्राः अर्वाचीनोर्थेन विनियुक्ताः। क्रियासाम्य-वर्णनसाम्यं च समानता अस्ति, परन्तु मन्त्रस्य विनियोगं मुख्यतः विशिष्टार्थपरकः। यथा दीक्षा-स्नानं अनन्तरं यजमानः विष्णो शर्मास[२९] मन्त्रानुसारं वस्त्रपरिधानं करोति। शत. ब्राह्मणे[३०] विष्णु शब्दस्य अर्थ यजमानः, मै.संहितायां[३१] ब्रह्मणभागे विष्णुशब्दः यज्ञः इत्युच्यते। अपरेव च दर्भेन यजमानस्य पवित्रकरणे- *चित्पतिस्त्वा पुनातु, वाचस्पत्वि पुनातु, तथा तस्य ते पवित्रपते......*[३२] विशिष्टार्थं प्रतिपाद्यते। तै.संहिताया[३३] *मनो वै चित्पतिः*, मै. संहिताया[३४] -*यज्ञो वै चित्पतिः, यज्ञो वै पवित्रपतिः*, शतपथे[३५] -*प्रजापति वै चित्पतिः*, अर्थात् विभिन्नार्थे विशिष्टार्थं प्रतीयते। अग्निचितियागे उखानिर्माणकाले *'ऋतं सत्यं सत्यमृतम्'* मन्त्रे आवृत्तशब्दः तै. संहितायां[३६], काठक-संहितायां[३७] च लौकिकार्थं प्रयोगः दरीदृश्यते। मै. संहितायाः[३८] *'ऋतं दिनम्, रात्रिं सत्यम्'* इति प्रयोगः परिलभ्यते। अतः संहिता-ब्रह्मणग्रन्थे विनियोगस्य विशिष्टार्थकस्वरूपं बाहुल्यम्। तदर्थं वैदिकसाहित्यं बृहद् अर्थसम्पत्तिः दिग्दर्शनं विदधाति।

## भावाश्रित-तत्त्वम्

यज्ञप्रक्रियायाः अध्ययनेन केवलं बाह्य-मन्त्रार्थस्य सङ्गतिः पर्याप्तं नास्ति, परन्तु विनियोगे मन्त्रार्थस्य अनुकूलमानसिकपरिस्थितेः आनुकुल्यम् एकमपरमावश्यकम् । यज्ञसम्पृक्त-प्रत्येककार्येण

२६. तै.स., १.१.२.२
२७. तै.स., १.१.६.१४
२८. तै.स., १.१.५.१,२
२९. तै.स., १.२.१.६
३०. शत.ब्र., ३.२.१७
३१. मै.स., ३.६.६
३२. तै.सं., १.२.२.८-९
३३. तै.स., ६.१.१
३४. मै.स., ३.६.६
३५. शत.ब्र., ३.१.३.२२
३६. तै.स., ५.१.५
३७. काठ.सं., १६.५
३८. मै.सं., ३.३.४

सह मनसंयोगः अपरिहार्यः। तदर्थं विभिन्नस्थले क्रियायाः गौणं, किन्तु मन्त्रार्थस्य भावना-सर्वमुख्यं भवति। तद्वत् फलसिद्धिः सम्भवति। मनसम्बन्धित महत्त्वनिरूपणे शतपथे[३९] – मनसा यज्ञस्तायते मनसा एव क्रियते, तै.संहितायां[४०] मनः यज्ञस्य यजमानः प्रजापतिः च रूपेण विद्यते। मै.संहितायां[४१] -मनसः सकाशात् यज्ञस्य प्राप्तिरेव उल्लीखितम्। वि उपसर्गात युजिर् धातो निष्पन्नः विनियोगशब्दः। विनियोगं द्विविधम्। यथा विशिष्टार्थकं (वि उपसर्गेन सह विशिष्ठक्रियायाः विशिष्ठमन्त्राणां संयोगेन सूचयति), निष्ठापरकं ( मन्त्रः मनस-सकाशात् निःशेषेण संयुक्तं करोति)।

अतः मानसिकभावनाया विशेषमनसंयोगं विना मन्त्रस्य विनियोगं निष्प्रयोजनम्। विनियोगस्य प्रयोजनं स्पष्टीकरणे ब्राह्मणे[४२] *आशिषमेवशास्ते वा रक्षसाम-पहत्यैः........*मन्त्रेण उपांशुं क्रियते। निश्चयस्थले मानसिकचिन्तनं अत्यावश्यकम्। परन्तु क्रियाया मन्त्रानुसारं चिन्तनं विशेषमहत्त्वपूर्णम्। हविर्धान- आच्छादननिष्कासनकाले *मित्रस्य वश्चक्षुषा प्रेक्षे*[४३] अर्थात् हविदर्शनं ज्ञायते। परन्तु हविर्प्रेषणयमये हविदर्शनं विनियुक्तः। तद्वत् हविर्प्रेषणस्य प्रयोजनं दृश्यते ब्रह्मणे।[४४] यद्यपि क्रियाया साम्यसूचकः, प्रेक्षकशब्दः किन्तु दर्शनेन विनियोगस्य पूर्णप्रयोजनं नार्हति। वस्तुतः दर्शनस्य महत्त्वं नास्ति अपितु मित्रदृष्टिः, मित्रभावना, मनःन्तस्थले विराजमानस्य चिन्तनस्य परिप्रकाशयति। हविर्धानकाले शकटे स्पर्शनं शत्रुविनाशं प्रार्थनां विदधाति।[४५] विभिन्नस्थले बाह्यक्रियापेक्षा अन्तरनुभूतिः, आवश्यकता अनिवार्यम्।

यदि विनियोगसम्बन्धित विसङ्गतिदूरीकरणं मन्त्रार्थपरकचिन्तनेन सम्भवति, अर्थात् विनियोगस्य स्वतन्त्रतां प्रतिस्थापयति। यथा अग्निष्टोमयागे दीक्षासंस्कार अन्तरं व्रतपानं हस्तधौतसयमे[४६] विनियुक्तमन्त्रः यज्ञ-वाहिका-कल्याणकारिणीवृद्धिः च अह्वानं क्रियते। हवि-निष्कासनसयमे सूर्यः, अग्निहोत्रहवणी स्पर्शकरणे अग्ने आह्वानं करोति ।[४७]

स्पष्टतः क्रिया-मन्त्रार्थं एकतारूपता नास्ति परन्तु यदि क्रियाया करणसमये कर्त्ता अपेक्षा मन्त्रानुसारं यजमान-भावनाया, चिन्तनकरणेन विनियोगस्य उपयोगिता विदधाति, तदर्थं विनियोगे क्रियापेक्षा भावनायाः प्राधान्यं जायते। यज्ञ-प्रारम्भिक क्रियारूपव्रतपानस्य करणसमये पूर्वं हस्त-

---

३९. शत.ब्र., १.२.५.२-३

४०. तै.सं., २.२.१.२ ; मै.सं., ३.७.१.२ ; जै.उ., १.३३.२ : को.उ., १०.१.२६.३

४१. तै.स., ३.६.४

४२. छ.उ., २.२३.१

४३. तै.स., १.१.५.१२

४४. तै.स., ४.१.५

४५. तै.स., १.१.४.११

४६. तै.स., १.२.३.१४

४७. तै.स., १.४.१.३

प्रक्षालनेन यदि यजमानस्य यज्ञधारिणी, समर्थाः, कल्याणकारिणी, पवित्रवुद्धेः आह्वानेन समयोचितभावना अर्थात् प्रकाशते। मन्त्रार्थं क्रियाया उपरि आधारित नास्ति, निर्विवादः भवति। द्वितीयदृष्टान्ते हवि-निष्कासने, उखानिर्माणे च मन्त्रार्थं भावनायाः परिशीलनं च करणीयम्।

अतः मन्त्र-क्रियाया च सम्बन्धः अर्थयुक्तः अथवा कर्मयुक्तः, परन्तु अर्थ-कर्मयो सम्बन्धः मनसा साकं अवश्यकम्। सुतरां मन्त्रार्थानुसारं मानसिक-चिन्तनं विनियोगस्य आधारभूत-तत्त्वम्। विनियोगस्य स्वरूपं वस्तुतः केवलं ब्रह्मतः न क्रियाश्रितरूसमृद्धः किन्तु अर्थाश्रित भावसमृद्धः भवति।

## प्रतीकाश्रित-तत्त्वम्

सम्पूर्णयज्ञ एकप्रतीकात्मकः कर्मकाण्डः। मन्त्र-विनियोगस्य निर्देशकतत्त्वरूपेण विराजते। प्रतीक अर्थात् यो वस्तुः, अन्यवस्तुस्थानं ग्रहणं शक्नोति। यथा मेखलाबन्धनविषये ब्राह्मणे[४८] मेखला यजमानस्य बलस्याधानम्। मेखला औषधिविशेषः। औषधिः बलकारकः। अतः मेखला बलस्य प्रतीकः। प्रायशः सर्वेषु यज्ञेषु कोऽपि जीवनशक्तेः सृष्टितत्त्वस्य प्रतीकरूपेण विराजते। परन्तु विभिन्नेषु यज्ञेषु प्रतीकः स्थूलरूपेण दृश्यते। यथा मेखला ग्रहणे – ऊगस्यां गिरास्यूर्णम्रदा[४९] अर्थात् मन्त्रे प्रतीकात्मकं स्पष्टं नास्ति। परन्तु प्रतीकं विना मन्त्रस्य विनियोगः अस्पष्टः असङ्गतः च प्रतीतः। तदर्थं प्रतीकसमृद्धस्वरूपं आवश्यकं अपरिहार्यं च। प्रस्तरः (एकदर्भमुष्टिविशेषः) अग्नेः प्रदानकाले यजमानः[५०] उच्चार्यते- *मम सेवनीयः, व्यवहारयोग्यः, शुभकामनाया प्राप्तये।* मन्त्रे गमनक्रियायाः साम्यास्ति, प्रस्तरस्य संकेतं नास्ति। प्रस्तरः यजमानस्य सम्पूर्णकामभूतस्य प्रतीकः। कामनाया उद्भवः पुरुषः। अतः पुरुषस्य कामः च अभेदत्वं प्रतिपादितम्। शतपथे[५१] वर्णितं अस्ति- *काममय एवायं पुरुषः*। तै. ब्रह्मणे[५२] *'यजमानो वै प्रस्तरः'* अर्थात् प्रस्तरशब्दं कामयमान-यजमानस्य प्रतीकरूपं वर्णितम्, यजमानः अग्नेः प्रस्तरप्रदानपूर्वकं स्वतः देवलोकं प्राप्नोति।[५३] तदनन्तरं यज्ञपात्रे- स्रुवः, जुहूः, उपभृत्, ध्रुवादि मार्जनविषये - आयुः प्राणं मा निर्माज़ी, चक्षुः श्रोत्रं मा निर्माज़ी, यज्ञं प्रजां मा निर्माज़ो परिलभ्यते। शतपथे[५४], मै.संहितायाः[५५] पात्रस्य प्रतीकात्मकेन मन्त्रस्य विनियोगं विज्ञायते।

---

४८. मै.स., ३.६.७

४९. तै.सं., १.२.२.१७

५०. सा मे सत्याशीर्देवान् गम्याज्जष्टतरा पण्यात् पण्यतरा तै.सं., १.४.१.१७

५१. शत. ब्र., १४.४.२.७

५२. तै.सं., ३.३.६.७

५३. तै.सं., १.४.७

५४. शत.ब्र., १.११.११.२५

दर्शपूर्णमासयागे समाप्तिसमये अध्वर्युः जुहुः- उपभृत नामकस्त्रचा क्रमशः उर्ध्वगमनं अधोगमनं च करोति। उर्ध्वगमनकाले 'उद्ग्राभः' अर्थात समृद्ध्यार्थे, अधोगमनकाले 'निग्राभः' अर्थात् शत्रुं नाशयति। तै. संहितायां[56] ब्रह्मणभागे - *यजमानदेवत्या वै जुहूः, भ्रातृव्योपभृत् ।* अतः प्रसङ्गानुसारं प्रतीकात्मकं विभिन्नेषु अर्थेषु दरीदृश्यते।

स्पष्टतः विनियोगे सुनिर्दिष्टं आधारक्रियाया ,वस्तुनः च वर्णनेन मन्त्रार्थस्य विशेषमहत्त्वं विदधाति। परन्तु विनियोगे अन्याधारेण मन्त्रार्थस्य भाव-प्रतीकञ्च स्थानं नास्ति स्वल्पगुरुत्त्वपूर्णम् च तत् अर्थात् यज्ञस्य सार्थकता स्थूल-बाह्याधारेण सह सूक्ष्मान्तरिकभावसमृद्धेः प्रतीकसमृद्धेः च स्वरूपस्य स्वीकरणे मन्त्रस्य अप्रासङ्गिकपरिस्थितेः समाधानं सम्भवति। इदानीं समाजे मनुष्याः यदि सुनिर्दिष्टं-नियमेन (अर्थात् यज्ञस्य पद्धतिः अनुसृत्य) जीवनधारणं वा परिपालयति तदर्थं सर्वेषां मनुष्याणां कल्याणं प्रभविष्यति।

**डॉ. शम्भुनाथमण्डलः**

शिक्षासहायकः

म.सा.रा.वेदविद्याप्रतिष्ठानम्, उज्जैनः

मोबा. ८९१८१३२४७५

५५ . मै.सं., ४.१.११-१२

५६ . तै.सं., १.४.१२.४

**सहायकग्रन्थसूची**

*अथर्ववेदः,* सम्पा. दमोदरसातवलेकरः, वलसाडः स्वाध्यायमण्डलः, १८६५

*अष्टाध्यायी,* सम्पा. गोपालशास्त्री, वाराणसी : चौखाम्बासुरभारतीप्रकाशन, १९७५

*उपनिषद्,* गोरक्षपुर : गीताप्रेस

*ऐतरेयब्राह्मणम्,* सम्पा. सत्यव्रतसामश्रमी, कोलकाता, १८९५

*ऋग्वेदः,* सम्पा. रामगोविन्दशास्त्री, वाराणसी : चौखाम्बाविद्याभवन, २००७

*काठकसंहिता,* सम्पा. श्रीपादभट्टाचार्य, पुनाः स्वाध्यायमण्डल, १९९८

*गोपथब्राह्मणम्,* सम्पा. मेक्षकरणत्रिवेदी, वाराणसी : चौखाम्बासाहित्य, २०१२

*छान्दोग्योपनिषद्,* गोरक्षपुर : गीताप्रेस

*तैत्तिरीयब्राह्मणम्,* सम्पा. सत्यव्रतसामश्रमी, मैसुर, १९२१

*तैत्तिरीयसंहिता,* सम्पा. महादेवशास्त्री, लाहौर, १९११

*मैत्रायणीसंहिता,* सम्पा. श्रीधरः, लाइपजिंगः, १९८७

*शतपथब्राह्मणम्,* सम्पा. हरिस्वामी, दिल्ली : नागपब्लिशर्स, २००२

अङ्क- ३६
जुलाई - दिसम्बर २०२०

**वेदविद्या**
ISSN-२२३०-८९६२
UGC 'CARE' list Ind. Lang. Sl.No. 97

# वैदिकवाङ्मये पर्यावरणचिन्तनम्

**डॉ. मनुदेवबन्धुः**

**वेदानां महत्त्वम् -**

सृष्टिप्रारम्भे परमकारुणिकेन जगदीश्वरेण सम्पूर्णप्राणिनां कल्याणाय ऋग्वेद-यजुर्वेद-सामवेद-अथर्ववेदानां ज्ञानं प्रादायि। ज्ञानमिदम् अग्नि-वायु-आदित्य-अङ्गिरानामकचतुर्णामृषीणां माध्येन प्राप्तमस्माभिः। महर्षिदयानन्दो वेदानां महत्त्वं प्रतिपादयन् आर्यसमाजस्य तृतीये नियमे लिखति- "वेद सब सत्य विद्याओं का पुस्तक है, वेद का पढ़ना-पढ़ाना और सुनना-सुनाना सब आर्यों का परम धर्म है।"[१] महाराजः मनुस्मृतौ लिखति - "नास्तिको वेदनिन्दकः" वेदानां निन्दाकर्त्तारः नास्तिका भवन्ति।[२] मैक्समूलरो वेदमाहात्म्यं प्रतिपादयन् लिखति - The Regved is an oldest book in the world library संसारस्य पुस्तकालये ऋग्वेदः सर्वप्राचीनतमो-ग्रन्थोऽस्ति।[३] सम्पूर्णज्ञानस्य कोषो वेदेषु वरीवर्त्ति। वेदज्ञानं स्वाध्याय-परिश्रमाभ्यां प्राप्यते। संसारे यावत्यो विद्याः सन्ति तासां मूलं सर्वेषु वेदेषु विराजते। सम्पूर्णमानवतायाः कल्याणाय तस्योन्नतये च सर्वप्रकारकाः उपदेशाः राराजन्ते। अस्माकं महर्षयः सदा-सर्वदा सर्वसमस्यासमाधाने निरताः आसन्। प्रसङ्गानुसारेण पर्यावरणप्रदूषणस्य समस्यायाः समाधानमपि वेदेषु दरीदृश्यते।

**पर्यावरणं किम् -**

पर्यावरणप्रदूषणमद्य एकं विकटं सङ्कटमस्तिः। प्रकृतेः शाश्वतनियमानामवहेलना हानिकारी। सृष्टेः संरक्षणार्थं भूमिं परितो यद् आवरणम् ओतं प्रोतं परिवेष्टितञ्च परब्रह्मणा, तदस्ति पर्यावरणम्। पर्यावरण-शब्दस्य व्युत्पत्तिपरकेण अर्थेन इदं सुस्पष्टं विज्ञायते यद् अग्नि-वायु-जल-पृथिवी-आकाश-पञ्चस्थूलभूतेभ्य अस्माकं शरीरं निर्मीयते। एतेषां शोधनं पवित्रीकरणम् अस्माकं परमं कर्त्तव्यमस्ति। भूमौ जलं नद्यः, निर्झराः, सरोवराः, वनानि, उपवनानि, पुष्पाणि, फलयुक्ताः वृक्षाः,

---

१ आर्यसमाजस्य तृतीयो नियमः

२ नास्तिको वेदनिन्दकः, मनुस्मृतिः २/६

३ India : what can it teach us. maxmular

नानाविधपक्षिणः, ओषधयः, वनस्पतयः, ग्रहाः, उपग्रहाः, नक्षत्राणि, सूर्यचन्द्रौ, तारादयः, सर्वाणि तत्त्वानि पर्यावरणस्य अभिन्नानि अङ्गानि सन्ति।

**ब्रह्माण्डीय पर्यावरणे शान्त्यर्थं प्रार्थना -**

अस्माकं पुरातनाः ऋषयो जानन्ति स्म - यद् विना शान्तिं विना पवित्रताम् अस्माकं कल्याणसम्भवम्। अतस्ते यजुर्वेदस्य वैदिकशान्तिपाठेन जगन्नियन्तारम् अप्रार्थयन् -

"औ३म् द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि॥[४]

हे जगत्पते ! हे सर्वकर्मफलप्रदभगवन् ! द्युलोक-अन्तरिक्षलोक-पृथिवीलोक-जल-वनस्पति-ओषधि-विश्वदेव-ब्रह्मादयो सर्वे पदार्थाः मदीयं कल्याणं कुर्युः। सर्वे गुरुजनाः विश्वे परिजनाश्चास्माकं कल्याणं वितन्वन्तु। हे जगदाधार ! अद्य भवदीया शान्तिः मां परिरक्षेत् परिपालयेच्च।

**त्रिविधदुःखानि पर्यावरणञ्च -**

आर्यजनाः प्रतिदिनं हवनान्ते सत्संगान्ते च शान्तिपाठं कुर्वन्ति। ओ३म् शान्तिः शान्तिः शान्तिः उच्चारयन्ति/त्रिविधिदुःखानां परिशमनार्थं त्रिः शान्तिपाठं कुर्वन्ति। एकम् आध्यात्मिकं दुःखं, द्वितीयम् आधिभौतिकं दुःखम्, तृतीयम् आधिदैविकं दुःखम्। सर्वे मनुष्याः सर्वे प्राणिनश्च त्रिविधदुःखेभ्यः विमुक्तये प्रयतन्ते। इमानि दुःखानि सर्वान् मानवान् स्वाभाविकरूपेण पीडयन्ति। सांख्यदर्शनकारो महर्षिकपिलः समुद्घोषयति - **"अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः"**[५]

त्रिविधदुःखानामात्यन्तिकी निवृत्तिरेव अत्यन्तपुरुषार्थोऽस्ति। सांख्यकारिकायाः लेखकः ईश्वरकृष्णो लिखति - **"तस्माद्दुःखं स्वभावेन"** [६] इमानि दुःखानि स्वभावेन प्राप्यन्ते। महर्षिपतञ्जलिः एकाम् अभिनवां पद्धतिं प्रतिपादयन् लिखति - **"अभ्यासवैराग्यां तन्निरोधः"** [७] दुःखानां निरोधस्तु अभ्यासेन वैराग्येण च भवति।

**पर्यावरणरक्षणे वृक्षाणां महत्त्वम् -**

यदा-यदा पर्यावरणे चर्चा भवति, तदा-तदा वृक्षाणां नाम स्वयमेव आगच्छति । वृक्ष-पर्यावरणयोः समवायी सम्बन्धोऽस्ति। वृक्षाः वनस्पतयः ओषधयश्च वातावरणस्य विषाक्तं वायुं

---

४ यजुर्वेदः ३६/१७

५ सांख्यदर्शनम् १/१

६ तस्माद् दुःखंस्वभावेन, सांख्यकारिका

७ योगदर्शनम्, अभ्यासवैराग्याभ्यां तन्निरोधः ।

(Carbondioxide) सेवन्ते तथा चास्मभ्यं प्राणवायुं प्रणियच्छन्ति। वृक्षाः स्वाभाविकरूपेण पर्यावरणं शोधयन्ति। वृक्षेभ्यो वयं पुष्पाणि फलानि दारूणि च प्राप्नुमः। वृक्षस्य महिमानं व्यावृण्वन् ऋग्वेदो लिखति -

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभि चाकशीति॥**[८]

महर्षिदयानन्दोऽमुष्मिन् मन्त्रे त्रैतवादस्य परिकल्पनां करोति। वृक्षः प्रकृतिरस्ति। अस्यां प्रकृतौ सुन्दरपक्षयुक्तौ, समानवयस्कौ, परस्परमित्रभाववन्तौ द्वौ सुन्दरपक्षिणौ विराजेते। तयोरेकः वृक्षस्य स्वादिष्ठं फलमुपभुङ्क्ते, द्वितीयः पक्षी केवलं द्रष्टृरूपे विराजते। फलभोगकर्त्ता जीवात्मा अस्ति। तथा च साक्षिमात्ररूपे द्रष्टा परमात्मा विद्यते।

**यस्यां वृक्षा वनस्पतया ध्रुवास्तिष्ठन्ति विश्वहा। पृथिवीं विश्वधायसं धृतामच्छावदामसि॥**[९]

भूमिसुरक्षायै सुस्वास्थ्याय च पृथिव्यां वृक्षाणां वनस्पतीनां च प्राचूर्यं भवेत्। वृक्षाः जलौघदुर्भिक्षाभ्याञ्चास्मान् रक्षन्ति। अस्मभ्यं पुष्पाणि, फलानि, दारूणि, छायाञ्च ददति।

**वनस्पतिं वन आस्थापयध्वम्॥**[१०]

हे मानवाः ! यूयं वने वनस्पतीन् आरोपयन्तु। ग्रामेषु नगरेषु च वृक्षाणां वनस्पतीनाञ्च आरोपणमनिवार्यमेव।

**सृष्टिक्रमे पर्यावरणम् -**

तैत्तिरीयोपनिषदि सृष्टि-विद्यामधिकृत्य बहूक्तम्। यथा - "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी पृथिव्या ओषधय ओषधिभ्योऽन्नमन्नाद्रेतो रेतसः पुरुषः। स वा एष पुरुषोऽन्नरसमयः॥[११]

सृष्टिरचनाकाले क्रमशः आकाश-वायु-अग्नि-जल-पृथिवी-ओषधि-अन्न-वीर्य-पुरुषाः समुत्पन्नाः। एष पुरुषोऽन्नरसमयोऽस्ति। यादृशमन्नं भुज्यते तादृशमस्माकं शरीरं निर्मीयते।

**पर्यावरणप्रसङ्गे शिक्षासंस्थानम् -**

शिक्षासंस्थानां कुत्र भवतिव्यम् ? महापुरुषाः कुत्र निर्मीयन्ते इति जिज्ञासायां यजुर्वेदस्य घोषणा ध्यातव्या चिन्तनीया च।

---

८ ऋग्वेदः १/१६४/२०

९ अथर्ववेदः १२/१/२७

१० वनस्पतिं वन आस्थापयध्वम्, ऋग्वेदः १०/१०१/११

११ तैत्तिरीयोपनिषद् २/१

**उपह्वरे गिरीणां सङ्गमे च नदीनाम्। धिया विप्रो अजायत॥**[12]

पर्वतानामुपत्यकासु नदीनां सङ्गमे च धीराः, वीराः, गम्भीराः, वेदज्ञाः, राष्ट्रभक्ताः, परोपकारिणः ऋषयो मनुयश्च जायन्ते। अर्थात् गिरीणां पर्वतानाम् उपह्वरे नदीनां सङ्गमे तीरे च शिक्षासंस्थानानां गुरुकुलानां, महाविद्यालयानां, विश्वविद्यालयानाञ्च स्थापना कर्त्तव्या। अग्निहोत्रेणापि पर्यावरणं संशोधयितव्यमेव पञ्चयज्ञाः सदा यष्टव्याः। पर्यावरणसंरक्षणमवश्यमेव कर्त्तव्यम्। सर्वान्तेऽहं जगन्नाथं विश्वनाथं प्रार्थये -

**तन्मे मनः शिवसङ्कल्पमस्तु।**[13]

मनो मे शिवसङ्कल्पं सर्वकल्याणकरं भयरहितम् अभययुक्तं सर्वप्राणिहितकरञ्च भवेत्। ईर्ष्या-द्वेषादिभ्यो रहितं मनो मे भूयात्।

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभागभवेत्॥**

**डॉ. मनुदेवबन्धुः**
आचार्यो वेदविभागे
गुरुकुलकाङ्गडीविश्वविद्यालयः, हरिद्वारम्

१२ यजुर्वेदः २६/१९
१३ यजुर्वेदः ३४/१

अङ्क- ३६
जुलाई - दिसम्बर २०२०

**वेदविद्या**
ISSN-२२३०-८९६२
UGC 'CARE' list Ind. Lang. Sl.No. 97

# वेदेषु पर्यावरणस्य संरक्षणम्

**डा.सत्यव्रतनन्दः**

**उपक्रमः -**

परिवर्तनशीले समाजे काले काले विविधविषया दृष्टिगोचरा भवन्ति। केचन साधुप्रसङ्गाः लोकान् आनन्दीकुर्वन्ति तथा कानिचन समस्यान्तर्भुक्तानि तथ्यानि जनानां मतीः भ्रामयन्ति च। प्रतिदिनं समुत्पन्नेषु असुविधासु पर्यापरणप्रदूषणं, नाशश्च भवति एवं एका वाधा यया अनुदिनं जनाः प्रभाविता भवन्ति। ननु किमिदं पर्यावरणमिति चेत् – अस्मान् परितः आवृत्य संस्थितं यत् तत्त्वपदार्थं तन्नाम पर्यावरणम्। जीव-उद्भिद्-वनस्पतिसमेतं पञ्चतन्मात्राणां विषयभूतं प्रपञ्चं सर्वमिति अर्थावबोधः। तेषां आकालं सुरक्षा सकलजगतः दीर्घायुप्रसङ्ग एव। अतस्तेषां संरक्षणाय नित्यमुपदिशन्ति वेदाः, ब्राह्मणानि, आरण्यकोपनिषद्, दर्शन-पुराणादीनि सर्वशास्त्रपर्यन्तानि।

**विषयः –**

**ॐ मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वौषधीः। मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः। मधु द्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्मधुमाँ३ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः॥** [१]

मधुमये विश्वे सर्वदा तत्त्वानां परम्परमधुरसंसर्गेण सकलजगत् सुस्थं जीवितं वर्तते। प्रकृतिभूतानां सकलपदार्थानाम् एषा महद्भावना समस्तकल्याणं संसाधयती सर्वकालं पर्यावरणस्य आवश्यकतां महत्त्वञ्च प्रकाशयति। वैदिक-ऋषयः सहस्रवर्षं प्रागेव जगत् कल्याणाय पर्यावरणस्य महत्त्वप्रसङ्गे तथा तेषां सुरक्षाविषये च अवधारणां दत्तवन्तः। प्रकृतिसान्निध्येन सुन्दरं स्वास्थ्यं, सौमनस्यं तथा विविधरोगोपचारजनितान् महदुपयोगीतथ्यान् च निर्दिष्टवन्तः। न केवलं पर्यावरणस्य सुरक्षा, वरं पञ्चभूतेषु अभिमानीदेवतानां वन्दनं, औषधीनाम् आराधनं, विशेषतः कर्तनेन विना वनस्पतीनां पूजा वैदिककालीन समाजे दिव्यचिन्तनस्य प्रासङ्गिकतां प्रतिपादयति।

**यस्य भूमिः प्रमाऽन्तरिक्षमुतोदरम्। दिवं यश्चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः॥** [२]

---

१ काण्वसंहिता 14.31

२ अथर्ववेदः 10.7.32

मन्त्रेऽत्र परब्रह्म परमेश्वरस्य नमस्कारं विधाय प्रकृत्यनुसारं जीवनसाधनाय निर्देशः कृतो वर्तते। विधात्रा रचिता प्रकृतिरपि नित्यम् ईश्वरानुगता भूत्वा सकलहिताय संसरति। ईश्वरोपदेशं सेवमानासु सकलपदार्थेषु पर्यावरणमिदं कुतो वा पृथग् भविष्यति। तदेतस्यां भगवत्सृष्टौ पर्यावरणस्य स्थानम् अनन्यसाधारणं भवति। स्वार्थ इव परार्थं सेवमानं पर्यावरणमिदं निरन्तरं सेवाद्वारा सकलजीवजगतः प्राणरूपं भवति। यं विना जीवनम् असम्भवमेव। काले काले पर्यावरणस्य उपादेयतां निश्चित्य भवगता शब्दब्रह्मणा वेदप्रभृतिसकलशास्त्रेषु आत्मवत् पर्यावरणस्य सुरक्षा व्युपदिष्टा वर्तते। पर्यावरणमहत्त्वं, पर्यावरणमधिकृत्य वैदिक-अवधारणानामौचित्यं वर्तमानकाले नितरामनुभूयते।

जगत्कल्याणाय पर्यावरणस्य महत्त्वं विज्ञाय तद्रक्षार्थं सिद्धहस्ताः आसन् वैदिकमनीषिणः। प्रदूषणमुक्तपरिवेशनिर्माणाय तत्कालार्षयो मन्त्र-यन्त्र-तन्त्रपद्धतिषु सततप्रयत्नशीला दृश्यन्ते। निर्मलवायु-जलस्वच्छता-वृक्षसंरक्षणसन्दर्भे वैदिकोपदेशा भूयसा पठ्यन्ते – **दक्षं ते भद्रमाभार्षं परा यक्ष्मं सुवामि ते**[३] इति। अर्थात् शुद्धवायुना कल्याणकारीशक्तिम् अवाप्य रोगा मार्ज्यन्ते। अथर्ववेदे निगदितं यत् जलमेवौषधम् अमृतमयं चास्ति, तदुत्तमगुणसम्पन्नं जलं शरीरस्य विकारान् अपनोदयति। यथा -

**वारिदं वारायातै वरणावत्यामधि। तत्रामृतस्यासिक्तं तेना ते वारये विषम् ॥**[४]

यजुर्वेदे च जलस्य, वायोः, सूर्यकिरणस्य, अग्नेः पवित्रकारकत्वमुक्त्वा तेषां संस्पर्शेण शरीरपावित्र्यमुक्तम्। **देवीरापो अग्रेगुवो अग्रेपुवः। अग्र इममद्य यज्ञं नयत सुधातुं यज्ञपतिं देवायुवम्॥**[५] इत्यत्र यज्ञं यज्ञपतिं यजमानं च देवसम्बन्धीकृत्वा यज्ञफलसाधयितुं देवीरूपं जलं प्रार्थयति अध्वर्युः। अथर्ववेदे च तस्मिन् सर्वदेवनिवासत्वमुक्तम्– आपो वै सर्वा देवताः - **प्रविष्टा देवा सलिलान्यासन्**[६]। आपः **'शतपवित्राः'**[७] इति उक्त्वा समाजे जलसुरक्षायै एवं सचेतना कृता वर्तते वेदे। यया सचेतनया अध्यात्मभावं सेवयन्तो जनाः प्रदूषणात् जलमभिरक्षिष्यन्ति।

वायोः, सूर्यरश्मेश्च पवित्रकारकत्वं बहुधा श्रुतं काण्वसंहितायाम् – **अच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः**[८] इति। अपि च ऋग्वेदे उच्यते – **अमीवहा वास्तोष्पते विश्वारूपाण्याविशान्। सखा सुशेव**

३ ऋग्वेदः 10.137.4

४ अथर्ववेदः 4.7.1

५ काण्वसंहिता 1.17

६ अथर्ववेदः 10.8.40; ऐतरेयब्राह्मणम् 2.6

७ अथर्ववेदः 14.1.40

८ काण्वसंहिता 1.48

**एधि नः॥**[९] अर्थात् पवित्रवायुः द्युलोकात् आगत्य 'वास्तोष्पति' नाम्ना शरीरस्य समस्तरोगान् हरति। वास्तोष्पति-वायुः गृहं संशोधयन् मनुजस्यान्तः बाह्यस्थौ अवयवौ शुद्धीकृत्य आयुषो बृद्धिं करोति। अनेन वायुना शरीरं रोगमुक्तं भवति, तस्माद् वायोः शुद्धिकरणाय वैदिककाले आसंवत्सरं यज्ञाः अनुष्ठीयन्ते स्म।

वैदिकपरम्परायां प्रकृति-पुरुषाणां सम्बन्धः प्रत्येकम् अधिकृत्य वर्तते। प्रत्यक्षेण परोक्षेण वा भवतु वैदिकानां पर्यावरणसंरक्षणमुद्दिश्य तुलसी-पिप्पल-अश्वत्थादीनां वृक्षाणां सभक्तिकं पूजनात्मकं यद् आकर्षणं दृश्यते स्म, साम्प्रतमपि तदवलोक्यते। अद्यावधि मानसपटले जनानाम् एषा भावना संसरति यत् तुलसी-पिप्पलादीनां तरूणां उत्पाटने तत्परिणामं केवलं पापाय भवति। अतः प्रत्यहम् उपकारबुद्धयः(बुद्धिजीविनः) स्नानोपरान्तं तत् तद् वृक्षमूलेषु जलं समर्पयन्ति। यस्मात् स्वतः एव वनस्पतयः संरक्षिताः बहुफलवत्यश्च भवन्ति। सैषा हि अस्माकं पूर्वजां महर्षिणां प्रज्ञादृष्टिः मनोविज्ञानदिक् च आसीत्। **नमो वृक्षेभ्यो**[१०]**, वृक्षाणां पतये नमः**[११]**, ओषधीनां पतये नमः**[१२] इत्येवं वृक्षविशेषान् एव पूजायाः निमित्तत्वेन निश्चितवन्तः। यतोहि तुलसी-पिप्पलादि तरवः मात्राधिक्येन अम्लजान-उत्सर्जनक्षमा भवन्तीति प्रज्ञादृष्टयः(ऋषयः) ज्ञातवन्तः। नानेन अलम्, अपि तु वायुप्रदूषणमवरोद्धुं मात्राधिक्येन वृक्षाणां रोपणं क्रियते। यतोहि वृक्षेषु तत्सामर्थ्यं यत् वायुमण्डले '*कार्बन् डाइ अक्साइड्*' प्रभृति व्याधिजनकान् विनश्य वायुमण्डलं शुद्धं पूतञ्च करोति। पर्यावरणसंरक्षणे वृक्षरोपणस्य तथौचित्यं निदर्शयन् ऋग्वेदे वृक्षरोपणस्य उपदेशः क्रियते – **वनस्पतिं वनं आस्थापयध्वम्**[१३] इति। वनस्पत्यादीनां महत्वं प्रतिपादयन् तेषां विनाशमपि निवारितम् वेदे – **मा काकम्बरीम् उदवृहो वनस्पतिम्, अशस्तीर्वि हि नीनशः** [१४] अर्थात् हे प्रजाः! प्रदूषणविनाशिनम् औषधं-वृक्षान् मा छेदयथ, ते परितः प्रदूषणं विनाशयन्ति। यजुर्वेदेऽपि वृक्षाणां सततं रक्षायै उपदिश्यते – **स्वधिते मैनं हिंसीः**[१५] , **ओषध्यास्ते मूलं मा हिं सिषम्**[१६] इति।

वृक्षरोपणार्थं सर्वप्रथमं भूमिरपेक्षिता वर्तते। यथा वृक्षनिमित्तं भूमेरपेक्षा, तथैव भूमेः संरक्षणाय वृक्षस्य सहयोगिता नितराम् अनुभूयते एव। एवमेव उर्वरमृत्तिका वृक्षस्य यथोपकारी भवति

९ ऋग्वेदः 7.55.4
१० माध्यन्दिनसंहिता 16.17
११ माध्यन्दिनसंहिता 16.18
१२ माध्यन्दिनसंहिता 16.19
१३ ऋग्वेदः 10.101.11
१४ ऋग्वेदः 6.48.17
१५ माध्यन्दिनसंहिता 4.1
१६ काण्वसंहिता 1.41

उर्वरमृत्तिकासंरक्षणाय वृक्षमूलग्रन्थीनां सहाय्यमपि तद्वत् नित्योपकारी वर्तते। अनेन उपकार्योपकारकसम्बन्धेन मृत्तिकाया वनस्पतीनां च सुरक्षा लोकाय पर्यावरणस्य उपकारं ज्ञापयति। सैषा खननादिसन्तापभोग्याभूमिः अस्माकं मातृतुल्या इति वेदोपदेशः सर्वदा स्मारयति – **माता भूमिः पुत्रोऽहं पृथिव्याः**[१७] इति। जननीस्वरूपा सा भूमिः अन्नशस्यदानैः सर्वदा विश्वचराचरस्य पालन-पोषण-पुष्टीवर्धनादीनि करोति। अप्नस्वती(उर्वरा) तथा आर्तना(अनुर्वरा) इति भूमेः द्विविधता दृश्यते। यस्यां च भूमौ शीघ्रं शस्यम् अङ्कुरितं भवति तादृशी भूमिः अप्नस्वती नाम्ना निर्दिश्यते। यस्यां भूमौ किमपि अङ्कुरितं न भवति तादृशी भूमिः आर्तना इति कथ्यते।[१८] आर्तनाभूमेः उपयोगीकरणाय वैदिककाले पालितानां गवादीनां वन्धनं क्षेत्रेषु भवति स्म। येन गोमलमूत्रसंसर्गेण क्षेत्राणि सोर्वरकाणि भवन्ति स्म। इदानीं तु प्रभूता गावो न पाल्यन्ते, क्षेत्रेषु न बध्यन्ते चापि। आधुनिकविज्ञानेन रसायनप्रयोगेण प्रभूतं शस्योद्गमं सत्यं, परन्तु मृत्तिकाप्रदूषणं सर्वज्ञातमेव। कीटनाशकौषधेन रासायनिकमलेन च इदानीं मृत्तिकायाः उर्वराशक्तिः ह्रासतां गता वर्तते। तस्मात् उर्वरतायाः ह्रासं संघटिते कृषिक्षेत्राणि उत्पादनसामर्थ्यं हरन्ति। येन बाह्यसुन्दरेण अन्तः दुर्बलं भवति मृत्तिकायाः साम्प्रतं स्थितिः। विनाशस्यास्य निराकरणाय इदानीमपि प्रभुतुल्या भवन्ति गावः। गोमलमूत्रप्रक्षेपेण इदानीमपि सा आर्तनाभूमिः बहुफलयोग्या भवितुम् अर्हति।

यथावृक्षं लोककल्याणाय पञ्चभूतेभ्यः अनुकूलवैभवमपि ऋषयः प्रार्थितवन्तः –

**ॐ द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः वनस्पतयः शान्तिः विश्वे देवाः शान्तिः ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सामा शान्ति रेधि ॥**[१९]

शास्त्रदृष्ट्या वैज्ञानिकनिकदृष्ट्या वा पर्यावरणसंरक्षणाय यज्ञस्य भूमिका सर्वोपरि वर्तते। सर्वे अपि यज्ञाः पर्यावरणस्य मूलपोषकाः भवन्ति। तं यज्ञमुद्दिश्य चत्वारो वेदाः अभिप्रवृताः भवन्ति। वैदिकयज्ञद्वारा ह्येव प्रकृष्टो धर्मः सम्भवतीति मतं पोषयन्ति भारतीय दार्शनिकाः। **वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्मः। यथा यागादिः**।[२०] अत्र प्रयोजनकथनेन यद्यपि यागफलस्यैव अवधारणा प्राधान्येन स्वीकृता, तथापि यागादिभिः पर्यावरणसुरक्षापि फलाङ्गत्वे गौणत्वं प्रयोजनीयतां चावहति। यदि पर्यावरणदृष्ट्या विचारयामश्चेत् ऊर्जरसवृष्ट्यै वायुप्रदूषणपरिहाराय च यज्ञा अनुष्ठीयन्ते इति शास्त्रोक्तफलं ज्ञातमस्माभिः। यदधुना यज्ञानुष्ठानस्य विशिष्टानि

१७ अथर्ववेदः.12.1.12

१८ ऋग्वेदः.1.127.6

१९ काण्वसंहिता.36.1.17

२० धर्मनिरूपणम्, मीमांसान्यायप्रकाशः

उद्देश्यप्रयोजनानि विद्वद्भिः चर्च्यन्ते। अविरतं श्रौतकर्मानुष्ठानेन पर्यावरणस्य संरक्षणं हि वेदस्य भिन्नं महदुद्देश्यमेकं भवति इति निश्चयेन वक्तुं शक्नुमः।

यज्ञाग्नौ प्रक्षिप्ताज्यादिभिः निष्पादितधूमय उपरि गच्छन्ति। तेन धूमेन अन्तरिक्षः शुद्धं पूतं च भवति। वायुमण्डले विषकणिका नष्टा भवन्ति। वाष्पीभूता धूमयः सौरमण्डले गत्वा तत ऊर्जरसवृष्टिः सम्भवति। तया वृष्ट्या भूमौ नैका औषधयः समुत्पद्यन्ते। समुद्भूतानाम् ओषधीनां विनियोगो न केवलं यागकर्मणि अपि तु समस्तजीवजगति आरोग्योपचारादि महदुपकारं द्योतयति।

**निष्कर्षः –**

अनेन स्पष्टीयते यत् जगत्कल्याणाय पर्यावरणसंरक्षणविषये वैदिकर्षीणां सन्देशा वर्तमानपरिस्थितौ प्रेक्षापटेऽपि ग्रहणीया एव। वायुप्रदूषणं निवारयितुं सर्वैः यज्ञः करणीयः। तेन वायोः परिष्करणं सम्भवति। यतोहि यज्ञेषु रोगनाशकपदार्थानाम् आहुतिर्दीयन्ते।

जलप्रदूषणसमस्यामपाकर्तुं पवित्रनदीनां संरक्षणं सर्वैः नितरां करणीयं भवति। तेन देशे देशान्तरे च विविधजलसमस्या अपगमिष्यति। जीव-जन्तु-मानव-वृक्षादयस्तथा वायु-जल-मृत्तिकादीनां सन्तुलनं कर्तुं वन्यजीवसंरक्षणं परममावश्यकं भवति। तेन सहैव मानसिक-सामाजिकपर्यावरणं संरक्षितुं समाजो योग्यो भविष्यति। तदा एव सर्वत्र शान्तिः सत्याभिधानं भविष्यति।

सत्यमेतद्यत् सम्पूर्णे पर्यावरणे प्राणीनां जीवनशक्तेः सम्भावना प्रतीयमानत्वात् अनुदिनं तेज-वायु-जल-मृत्तिकादिभिः सर्वैः सार्द्धमनुकूलस्तिष्ठन् सर्वप्राणीजातस्य अपेक्षितप्राणतत्त्वानां सम्पुष्टिं कुर्यादद्य मानवः।

वस्तुतस्तु सम्पूर्णवैदिकसाहित्ये पर्यावरणसंरक्षणसम्बन्धे गम्भीरसङ्केताः प्रति पदमलङ्कुर्वन्ति। प्रस्तुतकाले यत् Green House Gas Effect लोके सर्वैरनिभूयते एवञ्च तत् मानवसम्बन्धित (Anthropogenic) इति कथ्यते, तस्य समाधानार्थमपि वेदे प्रकृतिपूजा तथा प्रकृतौ दैवसद्भाव इति तथ्यांशान् अपि संरक्षणपर्याये स्वीकर्तुं शक्नुमः। एवमेव वेदविदुषां विज्ञानानुचराणाञ्च सम्मिलितचेष्टा एव समस्यायाः अस्याः समूलोत्पाटने महदुपयोगी भविष्यतीति दिक्।

**डॉ. सत्यव्रतनन्दः**
राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः
Gmail : sipunsatyabrata@gmail.com
दूरवाणी : 8019507660

**सहायकग्रन्थसूची : -**

*अथर्ववेद* : सायणभाष्यसमेता, वैदिक संशोधन मण्डल, पुणे-37

*ऋग्वेद* : स्कन्दस्वाम-वेङ्कटमाधव-सायणभाष्यसमेता, डा. वि.आर् शर्मा, वैदिक संशोधन मण्डल, पुणे-37, 1988

*कठोपनिषद्* : चौखम्बा संस्कृत संथान, वाराणसी, 1994

*काण्वसंहिता* : सायणाचार्य-आनन्दवोध-भाष्यसमेता, डा. वि.आर् शर्मा, वैदिक संशोधन मण्डल, पुणे-37, 1988

*ज्योतिषां ज्योतिः* : जगन्नाथो वेदालङ्कारः, राष्ट्रियवेदविद्याप्रतिष्ठानम्, 1991

*बृहदारण्यकोपनिषद्* : मेहरचन्दलछमणदासपब्लिकेशन्स, 2009

*माध्यन्दिनशतपथब्राह्मणम्* : बुद्धदेव विद्यालङ्कार, स.शो.सं. सत्यम् बुक्स, दिल्ली, 2007

*वैदिक संस्कृति* : गोविन्द चन्द्र पाण्डे, लोकभारती प्रकासन, इलाहाबाद, 2001

*संस्कृतवाङ्मय में वर्णित भारतीय संस्कृति एवं कला* : रेखा शुक्ला, आरधना ब्रदर्स, कानपुर, 2017

अङ्क- ३६
जुलाई - दिसम्बर २०२०

**वेदविद्या**
ISSN-२२३०-८९६२
UGC 'CARE' list Ind. Lang. Sl.No. 97

# वेदेषु आयुर्विज्ञानम्

**डॉ. रमेशकुमारझा**

वैदिकवाङ्मयान्तर्गतया उपवेदा अपि भवन्ति। यथा आयुर्वेदः, धनुर्वेदः, गान्धर्ववेद, स्थापत्यवेदः सर्पवेदः, पिशाच वेदः इत्यादयः चतुर्भिः वेदैः सह एतेषां सम्बन्धो विद्यते। यथा - ऋग्वेदेन सह आयुर्वेदस्य, यजुर्वेदेन सह धनुर्वेदस्य, सामवेदेन सह गान्धर्ववेदस्य अथर्वदेन सह इतिहासपुराणस्थापत्य-सर्पवेद पिशाचवेद-असुर वेदानां च सम्बन्धोऽस्ति। एते उपवेदा अपि ऋषिप्रणिता श्रुतिमूलका एव। एतेषु आयर्वेदः वैद्यविद्याबोधकः। आयुर्वेदः तृतीय उपवेदो भवति। अयमथर्ववेदस्याङ्गत्वेन स्वीक्रियते। केषुचित् स्थलेषु अयम् ऋग्वेदस्यापि अङ्गत्वेन परिकल्पिता। परन्तु वैद्यकग्रन्थेषु केवलमर्थवेदस्यैवाङ्गत्वेनायं परिगणितः। अस्याः विद्यायाः गुरुप्रणाली वैद्यकग्रन्थेषुपलभ्यते। यदा - आदौ ब्रह्माप्रजापतिमायुर्वेदमध्यापयामास। प्रजापतिः अश्विनकुमारौ, तौ इन्द्रम् इन्द्रः धन्वन्तरिमत्रिश्च, अत्रिः चरकादिकश्च। आत्रेष्ट शिष्या आसन्। यथा - अग्निवेशः, भेलः जातुकरणः पराशरः, क्षीरपाणिः, हरीतश्च। धनवन्तरेः शिष्यः सुश्रुतः। सुश्रुतः विश्वामित्रस्य पुत्रः आसीत्। दिवोदासराजा धन्वन्तरेरवतार इति मन्यते।

शरीरविद्याया उत्कृष्टज्ञानप्राप्त्यर्थमायुर्वेदग्रन्था उत्तुङ्गश्रृङ्गभूता भवन्ति। वैद्यकग्रन्थेषु बृहत्त्रयीः लघुत्रयीति नाम्ना षड्ग्रन्थाः प्रसिद्ध सन्ति। यथा - 1. बृहत्त्रयी (चरक-सुश्रुत-वाग्भटग्रन्थः) 2. लघुत्रयी (भावप्रकाशः माधवनिदानम्, शार्ङ्गधरश्चेति)।

पुरुषार्थचतुष्टयमेव जीवनस्य लक्ष्यं मानवानाम्। एतत् साधयिंतु शरीरमेव आद्यकारणम् अत एवोक्तम् "शरीरमाद्यं खलु धर्मसाधनम्" अद्यत्वे संसारे विभिन्नरोगैः आक्रान्ताः सन्ति जनाः, यतोहि जीवनशैली एवास्य कारणम्। आयुर्वेदोपचारमाध्यमेन (साईड इफेक्ट) न भवतीति बहूनामायार्वेदचिकित्सानाम् अनुभविनां विचारः। आयुर्वेदग्रन्थेषु बहूनां रोगाणां वर्णनं कृतमस्ति एवं तस्योपचारोऽपि प्रदर्शितम्। तेन माध्यमेन बहूनां रोगाणामुपचारं विधाय स्वस्थाः भवितुमर्हाः जनाः।

**आयुर्वेदस्य प्रयोजनम् -**

येन मनुष्य आयुसम्बन्धिनं ज्ञानम् आयुं व प्राप्नोति स आयुर्वेदः। यथा सुश्रुतसंहितायामुक्तम् - "**आयुरस्मिन् विद्यते, अनेन वा आयुर्विन्दतीति आयुर्वेदः**[१]" मानवजीवनं सुखमयं कर्तुं

१ सुश्रुतसंहिता सूत्रस्थनम् 1-14

स्वस्थशरीरस्य स्वास्थ्यरक्षार्थं तथा व्याधिग्रस्तशरीरस्य रोगाणां निवारणाय महर्षिभिः स्वस्य ज्ञानानुभव-प्रयोगबलेन यच्छास्त्रं रचितं तदायुर्वेदाशास्त्रम्। चरकसंहितायामुक्तम् -

**हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्।**
**मानञ्च तच्च यत्रोक्तमायुर्वेदः स उच्यते ॥**[२]

**आयुर्वेदस्य अष्टाङ्गानि -**

सुश्रुतसंहितायाम् आयुर्वेदस्य अष्टाङ्गान्युक्तानि **"शाल्यं, शालाक्यं, कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, अगदतन्त्रं, रसायनतन्त्रम्, वाजीकरणतन्त्रमिति**[३]**"** 1 शल्यतन्त्रम्, 2. शालाक्यतन्त्रम्, 3. कायचिकित्सा, 4. भूतविद्या, 5. कौमारभृत्यम्, 6. अगदतन्त्रम्, 7. रसायनतन्त्रम्, 8. बाजी-करणतन्त्रञ्च। एतेषामष्टाङ्गानां संक्षिप्तपरिचयेनापि आयुर्वेदस्य विशालरूपस्य परिचयो भविष्यतीति मत्वा तत्स्वरूपं प्रस्तौमि।

**शल्यतन्त्रम् -**

शल्याहरणप्रधानं तन्त्रं शल्यतन्त्रम् शल्यशाब्दस्यार्थः अद्यत्वे (सर्जरी) इति प्रयुज्यते। यस्मिन् मनः, शरीञ्च कष्टमनुभवति तत् शल्यम् उक्तं हि **"मनः शरीराबाधकरणि शल्यानि"** नानाविधतृणानि, काष्ठखण्डाः शिला, रजः (धूल) लोहः मृत्तिका, अस्थि, केशः, नखः पूयस्राव (Secrections) दुष्टव्रणादिः शल्यरूपपदार्थान् निष्कासयितुं विधेः वर्णनं यस्मिन् तन्त्रे वर्तते तत् शल्यतन्त्रम्। यन्त्रशस्त्रक्षारादीनां प्रयोगेन रोगः शीघ्र शान्तिमधिगच्छति। उक्तं हि तत्र शल्यं नाम **"विविधतृणकाष्ठपाषाणपांशुलोहलोष्ठास्थिबालनखपूयस्रावदुष्व्रणान्तगर्भशल्योद्धरणार्थं, यन्त्र-शस्त्रक्षाराग्निप्रणिधानव्रणविनि श्चवयार्थं च।**[४]**"**

**शालाक्यतन्त्रम् -**

शालाक्यम् अर्थात् शलाका, अस्मिन् तन्त्रे नेत्रं, नासिका, कर्णः मुखरोगेषु चोत्पन्नरोगान् दूरीकरणाय शलाकायन्त्रस्य प्रयोगः क्रियते अत एव शालाक्यतन्त्रमुच्यते। उक्तं हि **"शालाक्यं नामोर्ध्वगतानां श्रवणनयनवदनघ्राणादिसंश्रितानां व्याधीनामुप शमनार्थम्"** [५] जत्रुणोर्ध्वं जाता रोगाः नासक्षिकर्णकण्ठादिगता अर्थात् ग्रीवायाः अस्थि ततोर्ध्वभागः। आयुर्विज्ञानशब्दावल्याम् (Clavicle) उच्यते।

---

२ चरकसंहिता सूत्र. 1-59

३ सु. वेदोत्पत्तिरध्यायः

४ सु.सूत्र. 1-1

५ सु. सूत्र. 1-2

**कायचिकित्साः -**

कायः अर्थात् सम्पूर्णशरीरम्। शिवदासेनोक्तम् **"कायः सकलं शरीरम्"** अस्य शब्दस्य प्रयोगः जठराग्निरूपेणापि भवति। **"जाठरः प्रणिनामग्निः कायः इत्यभिधीयते"** इति भोजः। मनुष्यस्य शरीरे जठराग्निः इत्यस्य महत्त्वमधिकं वर्तते। अग्निः विकृतः भवति चेत् मनुष्यः विकृतः भवति, अग्निः सम्यक् भवति तर्हि मनुष्योऽपि स्वस्थः भवति। अतः अग्नेः चिकित्सा एव कायस्य चिकित्सा, भगवता कृष्णेन गीतायामुक्तम् -

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तो पचाम्यन्नं चतुर्विधम् ॥**[६]

चतुर्णामन्नानां पचनं वैश्वानरस्य कृपायाः फलं वर्तते। शरीरे विद्यमानस्य अग्नेः चिकित्सा एवं कार्यचिकित्सायाः मुख्यं कर्तव्यमस्ति उक्तं हि :

**जाठरः प्राणिनामग्निः कायः इत्यभिधीयते। यस्तं चिकित्सेदविकृतं स वै कायचिकित्सकाः ॥**[७]

शरीरस्य अङ्गेषु व्यापतं ज्वर-रक्तपित्त-उन्माद-अपस्मार-कुष्ठ-प्रमेह अतिसारादीनामुपचारस्य वर्णनं यस्मिन् अङ्गे भवति तत्कायचिकित्सा। उक्तं हि - **कायचिकित्सा नाम सर्वाङ्गसंश्रितानां व्याधीनां ज्वररक्तपित्तशोषोन्मादापस्मारकुष्ठमेहातिसारादीनामुपशमनार्थम्।**[८]

**भूतविद्या -**

देवः, असुरः, गन्धर्वः, यक्षः, राक्षसः, पितरः, पिशाच, नागः, ग्रहादीनां दुष्प्रभावन येषां चित्तं ग्रसितं तेषामुपचाराय शान्तिपाठः, धर्मः, कर्म, बलिदानादीनां विधानं क्रियते तत् भूतविद्यातन्त्रमुच्यते। उक्तं हि - **भूतविद्या नाम देवासुरगन्धर्वयक्षरक्षः पितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिहरणादिग्रहोपशमनार्थम्**[९] भूतावेषे मनोविक्षिप्तसदृशानि लक्षणानि अधिकानि दृश्यन्ते। वर्तमानकाले देवदानवादीनामस्तित्वं नाङ्गीक्रियते। गन्धर्वाः, देवगायकाः, यक्षाः धनादयः रक्षांसि रावणादीनि पिशाच पिशिताशानाः अनया इति भूतविद्या तथा च **"भूतावेशाय वारणार्थविद्या भूतविद्या"** एवं च।

**ग्रहभूतपिशाचा च डाकिनी शाकिनी ग्रहाः।**
**एतेषां निग्रहः सम्यक् भूतविद्या निगद्यते ॥** इति डल्हणः।

---

६ गीता.अं. 15.14

७ संस्कृतशास्त्रों का इतिहास पृ. 5 आचार्य बलदेव उपध्याय।

८ सु.सूत्र. 1-3

९ सु. सूत्र. 1-4

**कौमारभृत्यम् -**

कौमारभृत्यशब्दस्यार्थः वर्तते शिशोः भरणपोषणं तस्य चिकित्सा परिवर्तनं च। अद्यत्वे प्रशूतितन्त्रस्य यद् महत्त्वम् वर्तते ततोऽपि अधिक महत्त्वं प्राचीनकाले अस्य तन्त्रस्य आसीत्। कस्यापि वर्गस्य देशस्य वा उत्थानस्य कारणं शुद्धपुष्टसन्तानोत्पत्तिः वर्तते। योग्यस्य तथा उत्तमसन्तानस्य विचार अस्य तन्त्रस्य मुख्य विषयः वर्तते। उक्तं हिः- **"कौमारभृत्यं नाम कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानां व्याधीनामुपशमनार्थम्"** कुमाराः बालाः तेषां धृतिधारण पोषणं च तस्या भृत्या इदं तन्त्रमिति कौमारभृत्यम् इति डल्हणः अन्यच्च

**गर्भोपक्रमविज्ञानं सूतिकोपक्रमस्तथा।**
**बलानां रोगशमनं क्रिया बालचिकित्सितम्॥**[१०] इति हारीत।

पाश्चात्यवैद्यकैः कौमारभृत्यतन्त्रं बालचिकित्साविज्ञानमुच्यते। काश्यपसंहितायां "गर्भबाल-कुमाराख्यमित्येतत्त्रिविधं वयः" इत्यनेन प्रसूतितन्त्रम् बालचिकित्साविज्ञानयोः परस्परसम्बन्धः प्रदर्शितः।

**अगदतन्त्रम् -**

अगदतन्त्रस्य अपरं नाम विषतन्त्रं वर्तते। अस्य अनेक प्रकाराः भवन्ति। राज्ञः ऐश्वर्यशालिनः च मारयितुं तेषां शत्रवः विषप्रयोगं कुर्वन्तिस्म। अत एव कौटिल्यस्यादेशः वर्तते जाङ्गलीविद् वैद्यः राजानं निकषा सर्वदा तिष्ठेत्। चाणक्येन विषकन्यायाः प्रयोगः प्रसिद्ध एव। इदानीमपि अस्य शास्त्रस्य महत्त्वं वर्तते। विषधारी सर्पः कीटः मूषकादीनां दशनेन विषयुक्तोत्पन्नविकाराणां निराकरणस्य वर्णनं यस्मिन् तन्त्रे वर्तते तत् अगदतन्त्रम् उक्त हि - **अगदतन्त्रं नाम सर्पकीटलतामूषकादिदष्टविषव्यञ्जनार्थं विविधविषसंयोगोपशमनार्थं च।**[११]

**रसायनतन्त्रम् -**

आयुर्वेदानुसारं मानवानां शरीरे सप्तधातूनां निवासो वर्तते। रसः, रक्तं, मांसम्, मेदः अस्थि मज्जा शुक्रश्च एषां पारिभाषिकसंज्ञा रसः वर्तते, येन विज्ञानेन शरीरस्य अयं रसः स्थिरः स्यात् तथा च नवरूपेण विद्यमानः स्यात् तत् रसायनम्। उक्तं हि - **"रसायनतन्त्रं नाम वयः स्थपनमायुर्मेधावलकर रोगापहरणसमर्थं च।**[१२] वयः स्थापनमित्युक्ते (To maintain youth, to increase longevity,) आयुर्मेधाबलकरञ्च अर्थात् (Intellectual capacity and strength) **"वयः स्थापनं नाम। जरापहरणं, तारुण्यं, बाहुबलं स्थापयतीत्यर्थः"** रसानां

१० सु. सूत्र. 1-5

११ सु. सूत्र. 1-6

१२ सु. सूत्र. 1-7

रसरक्तादीनाम् अयनमाप्यायनं रसायनम्, तदर्थं तन्त्रं रसायनतन्त्रम् अथवा रसानां रसवीर्यविपाकादीनाम् आयुः प्रभृतिकारणानाम् अयनं विषिष्टलाभोपायः रसायनम् तदर्थ तन्त्रं रसायनतन्त्रम् इति डल्हणः। रसायनसेवनेन शरीरस्य अयं रसः रक्तादिधातवः पुनः नवीनतामधिगच्छति। येन आयु: वर्धते।

**वाजीकरणतन्त्रम् -**

वाजी शब्दस्यार्थः अश्वः स्वीक्रियते येन विज्ञानेन मानवेषु शक्ति उत्पद्यते अर्थात् येन मानवेषु शुक्रवेगयोः वृद्धिः भवति तत् वाजीकरणम्। वाजीकर-औषधसेवनेन क्तिहीनाः पुरुषाः शक्तिशालिनः भवन्ति। **"वजनं वाजो वेगः प्रस्रवात् शुक्रस्य, स विद्यते वाजिनः अवाजिनो वाजिनः क्रियन्तेऽनेनेति वाजीकरणम्"** इति डल्हणः।

उक्तं हिः :- **"वाजीकरणतन्त्रं नामल्पदुष्टक्षीणादिशुष्करेतसामाप्यायनप्रसादोपचयजनननिमित्तं प्रहर्षजननार्थं च"**[१३]

**हृदयरोगः** (Heart Disease ) -

हृदोरोगः हृद्रोगः, हृदयस्य रोगः, हृदयरोगः। वृहदारण्यकोपनिषदि हृदयशब्दस्य सम्यक् निर्वचनं कृतम्। हृञ् हरणे, दद् दाने, एवञ्च इण् गतौ एभिः त्रिभिः धातुभिः हृदयः शब्दः निर्मितः **"तदेतत् त्र्यक्षरं हृदयमिति (1) इत्येकमक्षरम् स्वावान्ये च य एवं वेद वेद। (3) य - अभिहरन्त्यस्मै। (2) द इत्येकमक्षरम् ददन्ते अस्मै स्वावान्ये च य एवं इत्येकमक्षरम् य एवं वेदः। एवं हरतेर्ददतेरेतेर्हृदयशब्दः।"**[१४] अर्थात् पाचनक्रियया निर्मितस्य रसस्य आहरणं तथा शरीराय शुद्धरक्तस्य प्रदानम् एवञ्च् निरन्तरं रक्तस्य सञ्चरणशीलता इति। हृदयसम्बन्धी अथवा कार्यसम्बन्धी विकारहृदयरोगः कथ्यते। अत्युष्णमन्नम् अतिगुरुर्वन्नम्, अतिकषाय-रस-द्रव्यम् एतेषां नियतसेवनैः अतिरिक्तचिन्ताभिः हृद्रोगाः हृदयरोगाः सम्भवन्ति। उक्तं श्रमाभिघातघ्यशनप्रसङ्गैः। माधवनिदाने अत्युष्ण गुरुर्वन्न-कषाय-तिक्त-श्रमाभिघातघ्यशनप्रसङ्गैः।

**सञ्चिन्तनैर्वेगविधारणैश्च हृदामयः पञ्चविधः प्रदिष्टः॥**[१५]

पुन च विगुणाः (कुपिताः) दोषाः हृदयं गताः सन्तः रसं दूषयित्वा हृदये बाधां कुर्वन्ति, तं हृदयरोगं प्रचक्षते।

१३ सु. सूत्र. 1-8

१४ बृ. उपनि.अं. 5, तृ. ब्राह्मण, 1, कायचिकित्सा पृ.475, आचार्य विद्याधरशुक्ल।

१५ माधवनिदाने (हृद्रोगनिदानम् 1 )

**दूषयित्वा रस दोषा विगुणा हृदयं गताः।**
**हृदि बाधां प्रकुर्वन्ति हृदरोग तं प्रचक्षते॥**[१६]

**निदानमुचारश्च -**

अर्जुनवृक्षस्य त्वचं, द्राक्षां मधुकपुष्पाणि चूर्णयित्वा जलेन क्वाभ कुर्यात्। चतुर्थांशे जले अवशिष्टे स्वच्छवस्त्रेण शोधयेत्, पुनः शीतले अस्मिन् जले गुडं धात्रीफलं च मेलयित्वा मुखमुद्रां मासं विदध्यात्। अस्मिन् अरिष्टे गुडेन सह शततोलामितं मधु मेलयेत्। इदमुत्तमं हृदौषधं विद्यते। ग्रन्थे अस्याः संज्ञा पार्थाचरिष्टमिति दृश्यते। अर्जुनारिष्टमप प्रसिद्धा संज्ञा अस्ति। अपरा चिकित्सा रससिन्दूरेण पिप्पलेन मधुना व सह मेलयित्वा तत्सेवनं हृदरोगे लाभकरं भवति।

**मधुमेह** (Diabetes )

मधुमेहशब्दस्यार्थः मूत्रं मधुसमं प्रमेहति स मधुमेह, प्रमेहति, मधुसमम् ईक्षुरसमिव इत्यर्थौं। अस्मिन् विषये माधवनिदाने उक्तम् -

**आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसाः पयांसि।**
**नवान्नपानं गुडवैकृतं च प्रमेहहेतुः कफकृच्च सर्वम्॥**[१७]

अर्थात् सुकोमले आसने शयनं दधिग्राम्य छागादीनाम् औदकानां कूर्मादीनां राह महिष्यादीनां मांसरसा नवान्नं (गुडविकार) कफकारकञ्च् सर्वं वस्तु कारणानि भवन्ति। मधुमेहस्य विंशतिः प्रकाराः भवन्ति।

**प्रमेहविंशतिस्तत्र श्लेषमतो दशपित्ततः। षट् चत्वारोऽनिलात्॥**[१८]

कफजप्रमेहः दश, पित्तजप्रमेहः षट् वातजप्रमेहः चत्वारः। चरकसंहितायाः सूत्रस्थाने अपि विंशतिः भेदाः मधुमेहस्योवक्ताः -

**कफ सपित्तः पवनश्चदोषाः मेदोस्रशुक्राम्बुवसा सलीकाः।**
**मज्जा रसौजः पिशितं च दूष्याः प्रमेहिणां विंशतिरेव मेहाः॥**[१९]

एतेषामुपेक्षा न करणीया नांचे प्रमेह असाध्यः भवति।

१६ माधवनिदाने (हृद्रोगनिदानम् 2 )

१७ माधवनिदाने (प्रमेहनिदानम् 2 )

१८ अष्टाङ्गहृदयम् निदानस्थानम् अ.10-1

१९ चरकसंहिता चित्रस्थानम् 6-7

**निदानमुपचारश्च -**

अष्टाङ्गहृदये स्पष्टं वर्तते। आमलिकरसेन आलोडितेन मधुना अन्विता हरिद्रा प्रभाते पेया। दारुहरिद्रा-देवदारु-त्रिफला-नागरमुस्तादीनां जले क्वाथं विधाय पाययेत्। मधुना संयुक्तं गिलोयरसम् आमलिकरसेन पाययेत्। हारीतकी नागरमुस्ता कायफलानां क्वाथ संयुक्तमेव पाययेत्। शुष्कवनप्रदेश जीवानां मासं प्राक्तनिमधुनामनि मदिरा अरिष्टासवः अपरिपक्वनारिकेलरसः मधुसंयुक्तजलं च सर्वविधेषु प्रमेहेषु हितं कुर्वन्ति। मधुमेहे शिलाजीतस्य प्रयोगलाभकरो भवति।

**मधुमेहित्वमापन्नो भिषग्भिः परिवर्जितः शिलाजतुतुलामद्यात्प्रमेहार्तः पुनर्नवः ॥**[२०]

अर्थात् चिकित्सकैः असाध्यः इति उक्त्वा यः रोगी त्यक्तः सः पञ्चकिलोपरिमितं शिलाजीतं खादति तदा सः रोगी पुनः युवा सदृशः भवति। साधनहीनप्रमेहरोगी छत्रोपानद्रहितः मुनिसदृशमाहारं कुर्वन् चतुः शतक्रोशमितं गच्छेत्। कूपतडागादीनां खननं कुर्यात्। अथवा गोमयं गोमुत्रं च खादेत् तथा च धनुभिः सह भ्रमेत्। उक्तं हि - **"अधनच्छत्रपादत्ररहितो मुनिवर्तनः। योजनानां तं यायात् खनेद्वा सलिल शायान्॥ गोश्कृन्मूत्रवृत्तिर्वा गोभिरेव सह ब्रजेत्।"**[२१] जम्बु, गुडसार, सामज्जक, पूतिकरञ्ज, मींगी, आदीनां बीजानि, तथा च गूलर इत्यस्य त्वक् आम्रस्य बीजम् एतेषां समभागम् एकत्रीकृत्य चूर्णं निर्माय त्रिग्रामपरिमितं प्रातः सायं जलेन स्वीकरणीयम्। एतत् सर्व न प्राप्त चेत् यद् प्राप्तं तस्यैव चूर्णं स्वीकरणीयम्। एवं च विल्वपत्रं त्रिकोलपत्रं निम्बपत्र अपक्वहरिद्रा अशुष्कधात्रीफलं, कारवेल्लम् गुलरत्वक्, जम्बूत्वक् आदिषु यत् प्राप्यते तत् शिलायां पेषनं कृत्वा स्वच्छवस्त्रेण शोधयित्वा दश विशंतिः वा ग्रामपरिमितं प्रातः सायं पानेन लाभो भवति। उपर्युक्तं निदानमुपचारं च आयुर्वेदचिकित्सकस्य परामर्शेन एव स्वीकरणीयम्। आयुर्वेदशास्त्रीय ग्रन्थेषु बहूनां रोगाणां निदानम्, उपचारः औषधञ्च विस्तरेण वर्णितमस्ति। एवञ्च तेषां भेदाः लक्षणानि च वर्णितानि। आयुर्वेदस्य अभियानरूपेण अनुसन्धानस्य आवश्यकता वर्तते। आयुर्वेदनिमित्तं प्रयोगशालायाः आधुनिकीकरणमावश्यकम्। एषु आयुर्वेदग्रन्थेषु हृदयरोगः, मधुमेहः, पाण्डुरोगः, अतिसार शूलरोगः, ज्वरः, त्वकरोगः, तिमिररोगः अस्थिभङ्गः दन्तरोगः, नेत्ररोगः, कासरोगः, दाहरोगः, यक्ष्मा, कृमि एवम् अर्शरोगः, श्वासरोगः, कुष्ठरोगः, यौनसङ्क्रमणम्, सन्धिगतरोगः, वात-पित्त-रक्तादीनां रोगाणाम् अनेके प्रकाराः सन्ति। एतेषां निदानमुपचारश्च विस्तरेण वर्णितमस्ति। आयुर्वेदग्रन्थेषु चिकित्साविज्ञानस्य भण्डारः वर्तते।

**डॉ. रमेशकुमारझा**

सहायकाचार्यः, ज.ना.ब्र.आ.सं. महाविद्यालयः,

लगभग, दरभंगा, बिहारः

२० अष्टाङ्गहृदयम् चिकित्सास्थनम् अ. 12-46

२१ अष्टाङ्गहृदयम् चिकित्सास्थनम् अ. 12-36

## सहायकग्रन्थसूची -

*अथर्ववेदः* , सम्पा.दमोदरसातवलेकरः, वलसाड : स्वध्यायमण्डलः, १८६५।

*ऋग्वेदः*, सम्पा. रामगोविन्दशास्त्री, वाराणसी : चौखाम्बाविद्याभवन, २००७।

चरकसंहिता, वाराणसी : चौखाम्बा ओरियन्टालिया, 2015।

सुश्रुतसंहिता, सम्पा. अम्बिकादत्त व्यास, वाराणसी : चौखम्बा संस्कृत सीरीज अफिस, 2001।

*माधवनिदानम्*, सम्पा. ब्राह्मनन्द त्रिपाठी, वाराणसी : चौखाम्बासुरभारतीप्रकाशन, 2018।

*अष्टाङ्गहृदयम्*, सम्पा. ब्राह्मनन्द त्रिपाठी, वाराणसी : चौखाम्बाप्रकाशन, 2003।

उपाध्याय,बलदेव. *वैदिकसाहित्य और संस्कृति*, वाराणसी : शारदासंस्थानम् ,२०१०।

अङ्क- ३६
जुलाई - दिसम्बर २०२०
**वेदविद्या**
ISSN-२२३०-८९६२
UGC 'CARE' list Ind. Lang. Sl.No. ९७

# वेदेषु शास्त्रान्तरेषु च प्राणिविज्ञानम्

## (ZOOLOGY IN VEDAS AND OTHER SHASTRAS)

**डॉ.सोमनाथदाशः**

*[सारांशः – प्रकृते शोधपत्रे प्राणिशब्दस्य अर्थः, परिभाषा च प्राणिनां वर्गीकरणम्, प्राणिनां विषये प्राचीनाः अर्वाचीनाश्च अवधारणाः विशेषतया शास्त्रीयप्रमाणैः पर्यालोचितास्सन्ति । संहिता-ब्राह्मणारण्यकोपनिषत्- पुराण-काव्यशास्त्रादिभ्यः उद्धरणानि स्वीकृत्य आधुनिकप्राणिविज्ञानस्य तौलनिकविचारविमर्शः क्रियते । प्राणिविज्ञानस्य वैशिष्ट्यम् आधुनिकयुगे तेषां प्रासङ्गिकता इति सन्दर्भे सामान्यं किञ्चित्पर्यालोचितम् ।]*

**प्राणिशब्दस्यार्थः परिभाषा, प्राणिनां वर्गीकरणञ्च**

प्राणोऽस्त्यस्य इति प्राणी इति व्युत्पत्त्या "प्राण" शब्दात् "अत इनिठनौ" इति सूत्रेण "इनि" प्रत्यये "प्राणिन्" इति शब्दस्य निष्पत्तिर्भवति । "प्राण" शब्दश्च प्र-उपसर्गात् अन् अच् इत्यस्मात् घञ्-प्रत्यये निष्पद्यते । श्वासः, जीवनशक्तिः, जीवनम्, जीवनस्य मूलतत्त्वमित्यादयः अर्थाः प्राणशब्देन गृह्यन्ते । अतः "प्राणी" इत्युक्ते श्वासयुक्तो जीव इत्यर्थोऽवगम्यते । यो जीवधारी सः प्राणी प्राणविशिष्टो मनुष्यादिः गृह्यते । चेतनः, जन्मी, जन्तुः, जन्युः, शरीरी इत्यादयः तस्य पर्याया भवन्ति । यथोच्यते अमरकोषे -

**जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः । प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ॥**

प्राणशब्दः हिन्दुदर्शने, योगदर्शने, आयुर्वेदे च जीवनशक्तिनाम्ना अभिधीयते । केषुचित् स्थलेषु अयं शब्दः सूर्योत्पन्नब्रह्माण्डव्यापिनीशक्त्यर्थे उपयुज्यते । आयुर्वेदे तन्त्रे च पञ्च प्राणाः प्रोक्ताः । यथा– प्राणापानोदानसमानव्यानाः । वेदेषु प्राणतत्त्वं विश्वस्व सर्वोपरि शक्तिरिति कथ्यते । यथा अथर्ववेदे –

**प्राणो विराट प्राणो देष्ट्री प्राणं सर्व उपास्तते। प्राणो ह सूर्यश्चन्द्रमाः प्राणमाहुः प्रजापतिम् ॥**

**प्राणाय नमो यस्य सर्वमिदं वशे। यो भूतः सर्वस्येश्वरो यस्मिन् सर्वं प्रतिष्ठितम् ॥**

ब्रह्मणारण्यकग्रन्थेषु प्राणतत्त्वं विश्वस्यादिनिर्माणत्वेन, जगत्स्पन्दकारणत्वेन च उद्घोष्यते । यथोक्तं बृहदारण्यकोपनिषदि –

**कतम एको देव इति । प्राण इति स ब्रह्मनद्रित्याचक्षते । प्राणो ब्रह्म इति स्माह पैदृश्यः ।**

शाङ्खायनारण्यके उच्यते –

**प्राण एव प्रज्ञात्मा । इदं शरीरं परिगृह्यमुत्थापयति ।**

**यो व प्राणः सा प्रज्ञा, या वा प्रज्ञा स प्राणः ॥**[1]

ऐतरेयारण्यके उच्यते –

**सोऽयमाकाशः प्राणेन बृहत्याविष्टब्धः, तद्यथा यमाकाशः प्राणेन बृहत्या विष्टब्धः**

**एवं सर्वाणि भूतानि अपि पिपीलिकाभ्यः, प्राणेभ्यः बृहत्या विष्टब्धानीत्येवं विद्यात् ॥**[2]

अर्थात् प्राणोऽस्य विश्वस्य धारणकारी तत्त्वं भवति । प्राणशक्त्या एव ब्रह्माण्डमिदं स्वस्थाने वर्तते। पिपीलिकातः प्रारभ्य हस्तिनं यावत् सर्वेऽपि जीवाः प्राणाश्रिता एव सन्ति । यदि प्राणशक्तिः न भवति तर्हि यत्किमपि दृश्यमानं जगदस्ति तददृश्यं स्यात् । शतपथब्राह्मणमतानुसारेण – **"प्राणे हि प्रजापतिः । प्राण उ वै प्रजापतिः । प्राणः प्रजापतिः ।"** अर्थात् प्राणा एव प्रजापतिः परमेश्वर इत्युच्यते ।

ऐतरेये पुनरप्युच्यते – "**सर्वं हीदं प्राणनावृतम्**" इति । अर्थात् सम्पूर्णमिदं जगत् प्राणशक्त्या आवृत्तमस्ति । एषा प्राणशक्तिः यस्मिन् वर्तते सः प्राणी इति कथ्यते । छान्दोग्योपनिषदि कथ्यते – "प्राणो वा ज्येष्ठः श्रेष्ठश्च" । प्रश्नोपनिषदि उच्यते – **"स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नाद्वीर्यतपोमन्त्राः कर्मलोकालोकेषु च नाम च ।"**[3] इति । अर्थात् परमात्मा सर्वादौ प्राणतत्त्वस्य संरचनां चकार । तदनन्तरं श्रद्धा उत्पन्ना । तदा आकाशम्, वायुः, अग्निः, जलम्, पृथ्वी इति पञ्च तत्त्वानि सृष्टानि । ततः क्रमशः मनः, इन्द्रियाणि, अन्नम्, वीर्यम्, तपः, मन्त्रः, कर्म इत्येतेषां निर्माणमभूत् । तदनन्तरं विविधलोकस्योत्पत्तिर्जाता ।

भृगुतन्त्रे प्राणतत्त्वस्य विषये ज्ञात्वा ज्ञाता अमृतत्त्वं प्राप्नोतीति कथ्यते । यथा -

**उत्पत्तिमायाति स्थानं विभुत्वं चैव पञ्चधा ।**
**अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते** ॥ इति ।

अत्र प्राणतत्त्वस्य विषये पञ्च प्रश्नाः उक्ताः सन्ति । यथा -

१) प्राणशक्तेः उत्पत्तिः कुतः जाता ?

१ शाङ्खा.आ. - ५/३

२ ऐ.आ. २/१/६

३ प्र.उ. -६/४

२) शरीरे प्राणशक्तिः कथमायाति ?

३) शरीरे प्राणशक्तिः कुत्र तिष्ठति ?

४) शरीरे प्राणशक्तिः कुत्र व्याप्यते ?

५) प्राणशक्तेः अध्यात्म किं भवति ?

एतेषां पञ्च प्रश्नानां समाधानं यः जानाति, सः अमृतत्वं प्राप्नोति इति भृगतन्त्रस्याभिप्रायः। एवं प्राणशक्तेः विषये अनेकानि तथ्यानि वेदोपनिषदादिषु प्राप्यन्ते, येषां चर्चा सामान्यैः कर्तुं नैव शक्यते। इयमेव प्राणशक्तिः येषु जीवेषु भवति ते प्राणिनः इति कथ्यन्ते । तेषां समूहः प्राणिजगत् इति कथ्यते ।

आधुनिकवैज्ञानिकपरिभाषाऽऽधारेण "प्राणी" वा "जन्तुः" "ऐनिमेलिआ" (Animalia) अथवा "मेटाजोआ" (Metazoa) इति नाम्ना प्रसिद्धजगतः बहुकोशीयः, जन्तुवत्पोषणप्रदर्शकः, जीवानां प्रमुखः समूहः इति कथ्यते । आंग्लभाषायां प्राणीति कथनेन "Animal" इति कथ्यते । अयं शब्दः लेटिनभाषायाः "Animalis" इति शब्दात् समागतः । अस्यार्थो भवति "Having Breath, having soul or living being". अर्थात् सः जीवसमूहो यस्य श्वासक्रिया भवति, येषामात्मा भवति, यो जीवति । प्राणिनामेतल्लक्षणम् अस्माकं संस्कृतशास्त्रेष्वपि तथैव प्रतिपादितमस्ति ।

एवं प्राणिशब्दस्य बहुधा व्याख्यानं प्राप्यते । एतेषां लक्षणानां परिशीलनेन तेषां कानिचन वैशिष्ट्यानि अनुभूयन्ते यानि वैशिष्ट्यानि तेषां जीवितवस्त्वन्तरात् पार्थक्यं प्रदर्शयन्ति । यथा –

१) प्राणिनः बहुकोशीयाः भवन्ति । एतल्लक्षणं तेषां जीवाणुभ्यः पार्थक्यं दर्शयति ।

२) प्राणिनः परपोषिणो भवन्ति । सामान्यतः एकस्मिन् आन्तरिककक्षे एतेषां भोजनं पाचनं च प्रचलति । एतल्लक्षणं तेषां पादपेभ्यः शैवालेभ्यश्च पार्थक्यं दर्शयति ।

३) सर्वेऽपि प्राणिनो गतिशीला भवन्ति । शास्त्रेषु यच्चरपदार्थरूपेण उच्यते । जीवनस्य कस्यामपि अवस्थायामेतद्गतिशीलत्वं प्रचलत्येव ।

४) प्राणिषु प्रजननसामर्थ्यं भवति । यत्र शुक्राणवः निर्मीयन्ते ।

**प्राणिविज्ञानस्याधुनिकपरिभाषाः**

"प्राणिविज्ञानम्" अथवा "जन्तुविज्ञानम्" जीवविज्ञानस्यैका शाखा भवति, यत्र जन्तूनां जीवन-शरीर-विकास-वर्गीकरणसम्बद्धाः विचाराः प्रस्तूयन्ते । अस्मान् परितः भिन्नभिन्नतया प्राणिनः वर्तन्ते । केचन मानवसमाजस्य कृते उपयोगिनो भवति, केचन च अनुपयोगिनः सन्तः समस्याः जनयन्ति । अतः प्राणिविज्ञानस्याध्ययनं सर्वेषां कृते महत्त्वपूर्णमेव भवति ।

प्राणिनामध्ययनं प्राचीनकालात् प्रचलति । अस्य प्रमाणानि पर्वतगुहाः ते भवन्ति, यत्र पशुपक्षिणां चित्राणि इदानीमपि प्राप्यन्ते । यूनानीदार्शनिकः अरस्तूमहोदयः ख्री.पू. ३०० वर्षेभ्यः पूर्वमेकं पुस्तकं रचितवान् । "गैलेना" (Galena) इति रोमनवैद्योऽपि द्वितीयशताब्द्यां पशूनां विशेषताः स्पष्टतया उल्लिखितवान् । एवं मध्ये प्राणिविज्ञानस्य उपरि अधिका चर्चा न जाता । ततःपरं षोडशशतके चिकित्साविद्यालयेषु अध्यापकानां विशेषदृष्टिः अस्य विज्ञानस्योपरि पतिता। ततः विज्ञानस्यास्याध्ययनं प्रारब्धम् । आधुनिकप्राणिविज्ञानस्य बीजवपनं जातम् । ततः जन्तूनां नामकरणम्, तेषां शारीरिकसंरचना इत्यादिविषये चर्चा प्रारब्धा । "लिनियस्" इति नाम्ना वैज्ञानिकः (१७३५ A.D.) "The System of Nature" इति ग्रन्थे जन्तूनां नामकरणवर्णनं चकार । अधुना प्राणिविज्ञानस्य विस्तारः दृश्यते । विविधानां शाखानां विभाजनमपि प्राप्यते । अत्र प्राणिविज्ञानस्य काश्चन परिभाषाः कोषाधारेण पर्यालोच्यन्ते ।

प्राणिविज्ञानमित्युक्ते आंग्लभाषायां Zoology इति कथ्यते । अयं शब्दः द्वयोः शब्दयोः मिश्रणेन सृज्यते । यथा – ग्रीक्शब्द : Zoon + Logos । अत्र Zoon इत्यस्यार्थो भवति Animal (प्राणी), Logos इत्यस्यार्थो भवति Knowledge or Study (ज्ञानं वा अध्ययनम्) । अतः Zoology इत्युक्ते प्राणिनां विषये ज्ञानं वा अध्ययनम् इति ।

Cambridge Dictionary मध्ये उच्यते - "Zoology is the scientific Study of Animal, especially their structure."

Merriam-Webster इति कोषः परिभाषते यत् – "Zoology is a branch of biology concerned with the classification and the properties and vital phenomena of animals." "Animal-life (Fauna)". "The Properties and vital phenomena exhibited by an animal, animal type or group."

अनेन एतत्स्पष्टं भवति यत् प्राणिविज्ञानं नाम प्राणिनां विषये वैज्ञानिकमध्ययनमित्युच्यते, यत्र तेषां प्रकाराः, तेषां शारीरिकसंरचना, तेषां खाद्यपेयानि, तेषां जीवनप्रक्रिया इत्यादयः विषयाः पर्यालोच्यन्ते । अत्र यानि अध्ययनानि प्रचलन्ति तेषां सूची अधस्तात् प्रदीयते । यथा -

१) शारीरिकसंघटना (Anatomy) - सर्वेषां जीवानां शारीरिकसंघटनायाः अध्ययनम् अत्र क्रियते । Anatomy is the Scientific Study of the Structure of Organisms including their systems, organs and tissues.

२) कोशविज्ञानम् (Cytology) – The study of the structure and function of cells is called Cytology. प्राणिनां शरीरान्तर्विद्यमानानां कोषाणां सङ्घटनाविषये यदध्ययनं क्रियते तत् कोषविज्ञानं वा Cytology इति कथ्यते ।

३) पारिस्थितिकीविज्ञानम् (Ecology) - The study of the interaction of organisms with their environment is called ecology. प्राणिनां परिवेशेन सह विद्यमानस्य पारस्परिसम्बन्धस्य अध्ययनं यत्र क्रियते तत् Ecology इति कथ्यते ।

४) भ्रूणशास्त्रम् (Embryology) – The study of the development an animal from the fertilized egg to birth or hatching is called embryology. उर्वरकेभ्यः अण्डकेभ्यः जन्मनः प्रारभ्य शिशुरूपेण प्राणिनां विकाशस्य अध्ययनं यत्र क्रियते तत् भ्रूणशास्त्रमिति कथ्यते ।

५) आनुवंशिकविज्ञानम् (Genetics) – The study of the mechanisms of transmission of traits from parents to offspring is called genetics. जनकजनन्योः सन्तानं यावत् लक्षणानां संचरणतन्त्रस्य अध्ययनं यत्र क्रियते तत् आनुवंशिकविज्ञानमित्युच्यते ।

६) ऊतिविज्ञानम् (Histology) - The study of tissues is called histology. प्राणिनामन्तर्विद्यमानानामूतीनाम् अध्ययनं यत्र क्रियते तत् Histology इति कथ्यते ।

७) आणविकजीवविज्ञानम् (Molecular Biology) – The study of sub-cellular details of animal structure and function is called molecular biology. पशुसंरचनायाः तथा कार्याणामुपकोशीयविवरणस्य अध्ययनं यत्र क्रियते तत् Molecular Biology इति कथ्यते ।

८) पराश्रयजीवविज्ञानम् (Parasitology) – ये प्राणिनः अन्येषां जीवधारिणामन्तः अथवा उपरि आश्रित्य खाद्यादिभिः जीवन्ति ते पराश्रयप्राणिनः (Parasite) इति नाम्ना उच्यन्ते। यथा – मत्कुणः (Flea), कृमिः (Worm), कवकम् (Fungus) इत्यादयः । एतेषां विषये यत्र चर्चा क्रियते तत् Parasitology इति कथ्यते ।

९) शरीरशास्त्रम् (Physiology) – The study of the function of organisms and their parts is called physiology.. प्राणिनाम् अङ्गप्रत्यङ्गकार्यप्रणाल्याः अध्ययनं यत्र क्रियते तत् Physiology इति कथ्यते ।

१०) वर्गीकरण-विकासविज्ञानम् (Systematics) – The study of the classification and the evolutionary Interrelationships among animal groups is called Systematics. यत्र प्राणिनां वर्गीकरणविषये तथा च विकासवादान्तः सम्बन्धानां विषये अध्ययनं क्रियते तत् Systematics इति कथ्यते ।

**प्राणिनां वैज्ञानिकवर्गीकरणम्**

प्रो.स्टोरस् तथा प्रो. यूसिंजर् इति नाम्ना प्रसिद्धाभ्यां वैज्ञानिकाभ्यां जन्तूनां वर्गीकरणमतीव सूक्ष्मदृष्ट्या कृतम् । आधुनिकवैज्ञानिकजगति एतयोः मान्यता सर्वाधिकतया वर्तते । समग्रस्यापि जन्तुजगतः विभागः एताभ्यां द्विधा प्रकल्पितः । यथा –

(१) प्रोटोजोआ (Progozoa) --- Protos नाम प्रथमः, Zoon इति जन्तुः । एवं प्रथमजन्तुः प्रोटोजोआ नाम्ना प्रसिद्धः । अत्र एककोशीयसरलप्राणिनः (Unicellular) अन्तर्भवन्ति । अस्मिन् समुदाये प्रायशः पञ्चसहस्रजातिविशिष्टाः जीवाः सन्ति । एते एकस्मिन् सङ्घे संस्थाप्यन्ते । एतेषां सङ्घ एव सङ्घप्रोटोजोआ (Phylum Protozoa) इत्युच्यते । अत्र अमीबा (Ameoba) इत्यस्य नैकाः जातयस्सन्ति ।

(२) मेटोजोआ (Metozoa) – अत्र बहुकोशीयजीवाः (Multicellular) अन्तर्भवन्ति । एतेषां जन्तूनां शरीरमनेकैः कोशिकाभिः निर्मीयते । रचनादृष्ट्या एते जीवाः प्रोटोजोआजीवेभ्यः जटिलाः भवन्ति । एतेषां वर्गीकरणमपि तेषां बाह्यत्वक्, अन्तस्त्वक्, मध्यस्तरः इत्येतेषामाधारेण क्रियते । द्विप्रकारकत्वग्धारिणः जीवाः द्विस्तरीयजन्तवः तथा भागत्रययुक्ताः जीवाः त्रिस्तरीयजीवा इति कथ्यन्ते । एतेषामपि अनेके सङ्घाः सन्ति । तत्र प्रमुखाः सङ्घाः यथा -

(क) पोरीफेरा (Porifera) छिद्रधारी – अत्र स्नानस्पञ्ज् इति जलीयजन्तवः गृह्यन्ते ।

(ख) सीलेन्ट्रेटा (Coelenterata) शून्यान्त्रधारिजीवः – एते जलीयजन्तवः सन्ति । जले प्रस्तरैस्सह अथवा जलस्थवृक्षैस्सह संलग्नाः सन्तः प्राप्यन्ते । यथा मूंगा, हाइड्रा इत्यादयः ।

(ग) प्लैटी हेल्मिन्थीज् (Platy Helminthes) कृमिविशेषाः - एतेषु टीनिआ इत्येकः प्रसिद्धः । अयं जीवः मनुष्यस्य अन्त्रेषु प्राप्यते ।

(घ) निमेटोडा (Nematoda) सूत्रतुल्यकृमिः – एतेषां शरीरं दीर्घं भवति, वेल्लनीवच्च दृश्यते। एते सूत्रकृमिः (Thread Worm) इति नाम्ना प्रसिद्धाः सन्ति । एते मनुष्यस्य अन्तरनाडिषु तथा गुदायां प्राप्यन्ते । एते परजीविनः भवन्ति । यथा – ऐस्केरिस् ।

(ङ) ऐनिलिडा (Annelida) – एतेषां शरीरमपि दीर्घं, कोमलं, खण्डेषु च विभक्तं भवति ।

(च) आर्थ्रोपोडा (Arthropoda) युक्तपदयुक्ताः जीवाः – अस्मिन् वर्गे कर्काटकः, मत्कुणः, यूकम्, पिपीलिका, मक्षिका, मशकाः इत्यादयः अन्तर्भवन्ति ।

(छ) मोलस्का (Mollusca) – अस्मिन् वर्गे जन्तूनां शरीरं कोमलं भवति । एतेषां शरीरं मैन्टल् इत्यावरणेनावृतं भवति । एतत् मैन्टल् कैल्सियम् इति द्रव्येण युक्तं कठिनं कवचं भवति । एते जलजीवाः सन्ति । एतेषु शङ्खः, अष्टपादिमत्स्यः इत्यादयः अन्तर्भवन्ति ।

(ज) इकाइनोटर्मेटा (Echinodermata) (कण्टकीयत्वग्युक्तजीवः) – अस्मिन् वर्गे सर्वेऽपि समुद्रजीवा एव भवन्ति । एतेषां त्वगपि कैल्शियम् कार्बोनेट् इति पदार्थेन निर्मीयते कण्टकयुक्ता च भवति । एतेषु तारामत्स्यः, Sea Urchins इत्यादयः जीवाः आगच्छन्ति ।

एवमेव कार्डेता (Chordoata) इति नाम्नाऽपि बहुकोशीयजीवेषु कश्चन वर्गः नामितोऽस्ति । अत्रापि नैकप्रकारकाः प्रजातयः वैज्ञानिकैः उद्भाविताः वर्तन्ते । मेरुदण्डिप्राणी, अमेरुदण्डिप्राणी इति नाम्नाऽपि भेदाः शारीरिकसंरचनादृष्ट्या प्राप्यन्ते । तत्र "प्रोटोकार्डेह्व" अथवा "एक्रेनिया" इति जीवाः अमेरुदण्डिप्राणिनो भवन्ति । एतेषां कशेरुका न विद्यते । मस्तिष्कपेटिकाऽपि न भवति । एतेषामपि समूहत्रयं लभ्यते । यथा – "हेमीकार्डेता", "यूरोकार्डेटा", "सफैलोकार्डेटा" इति ।

कशेरुकायुक्तानां प्राणिनामपि प्रसिद्धाः केचन वर्गाः विद्यन्ते । यथा – "साइक्लोस्टोमेटा" (Cyclostomata), कान्ड्रियक्थीज् (Chondrichthyse), आस्टिक्थीज् (Osteichthyse), कोएनिक्थीज् (Choanichthyse), एम्फीबिया (Amphibia), रेप्टीलिया (Reptilia), एवीज् (Aves), मैमोलिया (Mammalia) इत्यादयः ।

एवं प्रकारेण जन्तूनां वर्गीकरणमाधुनिकवैज्ञानिकैः प्रस्तुतमस्ति । तत्र पारिस्थितिकसंस्थाना-नुरोधेनापि जीवानां विविधदृष्ट्या वर्गीकरणं क्रियते । अत्र सामान्यतया जीवानां निवासस्थानं जलम्, स्थलम्, आकाशम्, मरुस्थलम् इति चतुर्धा परिवेशे दृश्यते । वातावरणानामाधारेण सर्वेषामपि जीवानां एतेषु चतुर्षु विभागेषु विभाजनं दृश्यते । यथा -

(१) जलजीवाः (Aquatic Animals) – अयं जीवानां वर्गः नदीषु, पुष्करिणीषु, समुद्रेषु, कूपेषु च तिष्ठन्ति, यत्र जलं विद्यते । यथा - मत्स्याः, कच्छपाः, शिशुमाराः, पेङ्गुइन् इत्यादयः ।

(२) वायवीयजीवाः (Aerial Animals) – एतेषु सक्रियतया डयन्ते ये पक्षिणः जीवा वा ते अन्तर्भवन्ति । यथा सर्वेऽपि पक्षिणः, जतुका, केच उडीयानाः मत्स्याः ।

(३) स्थलीयजीवाः (Terrestrial Animals) – स्थलीयजीवेषु केचन उभयचरा अपि भवन्ति । सरीरसृपाः, पक्षिणः, स्तन्यधारिणः अधिकांशाः जीवाः, मनुष्याः, व्याघ्रदयः पशवः अन्ये तत्समाः ।

(४) मरुस्थलीयाः जीवाः (Desert Animals) – मरुभूमौ निवसन्तः जीवाः अत्र आगच्छन्ति । यथा - ऊष्ट्रम्, काङ्गरूमृगः, मूषकः, मरुस्थलीयगोधिका, मरुस्थलीयमार्जारः इत्यादयः ।

व्यावहारिकदृष्ट्या जीवानां संक्षेपेण यदि वर्गीकरणं क्रियते, तर्हि अधोलिखिताः जीवाः प्राप्यन्ते। यथा –

१) जलीयजीवाः (Aquatic Animals)

२) सरीसृपाः (Reptiles)

३) पक्षिणः (Birds)

४) स्तन्यधारिजीवाः (Mammals)

५) वन्यपशवः (Wild Animals)

६) गृहपालितपशवः (Domestic Animals)

६) कृमिकीटाः (Insects) इत्यादिः ।

एवमाधुनिकसमाजेऽस्मिन् यः प्राणिसमूहः दृश्यते, प्राचीनकालेऽपि प्रायशः ते प्राणिनः आसन् एव । अस्माकं भारतीयज्ञानविज्ञानस्य निधिरूपेण संस्कृतभाषया रचिताः वेद-वेदाङ्गोपनिषत्-स्मृति-पुराण-दर्शन-साहित्यादिग्रन्थाः वर्तन्ते, यत्र प्राचीनसभ्यतायाः संस्कृतेश्च नैकानि तथ्यानि प्राप्यन्ते । तेषु प्राणिविज्ञानस्य विषये अथवा प्राणिनां विषये यानि तथ्यानि प्राप्यन्ते तदत्र किञ्चित् प्रस्तूयते ।

**संस्कृतसाहित्ये प्राणिविज्ञानम्**

संस्कृतवाङ्मयस्य सर्वप्राचीनग्रन्थाः वेदाः भवन्ति । चतुर्षु वेदेषु ब्रह्मणारण्यकोपनिषद्-संहितादिषु ग्रन्थेषु च जीवानां नामानि, तेषां वर्गीकरणम्, तेषां गुण-कर्माणि, स्वभावः, तेषामुपयोगिता इत्यादिविषयान् आधारीकृत्य नैकानि तथ्यानि प्राप्यन्ते । पशुपालनम्, पशुसंरक्षणम्, पशुसंवर्धनम्, पशुचिकित्सा इत्यादीनामपि विशिष्टविषयाणामुल्लेखः तत्र वर्तते । यजुर्वेदे त्रयोदशाध्याये अग्निस्तुतिसन्दर्भे आरण्यपशूनां सन्दर्भे नैके मन्त्राः प्राप्यन्ते, येभ्यः सुरक्षां दातुमग्निः निवेद्यते । यथा –

**इमं मा हिंसीर्द्विपादं पशुं सहस्राक्षो मेधाय चीयमानः**
**मयुं पशुं मेधमग्ने जुषस्व तेन चिन्वानस्तन्वो निषीद**
**मयुं ते शुगृच्छतु यं द्विष्मन्तं ते शुगृच्छतु ॥**

**इमं मा हिंसीरेकशफं पशुं कनिक्रदं वाजिनं वाजिनेषु**
**गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद**
**गौरं ते शुगृच्छतु यं द्विष्मन्तं ते शुगृच्छतु ॥**

**इमं सहस्रं शतधारमुत्सं व्यच्यमानं सरिरस्य मध्ये**
**घृतं दुहानामदितिं जनायाग्ने मा हिंसीः परमे व्योमन्,**
**गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद,**
**गवयं ते शुगृच्छतु यं द्विष्मन्तं ते शुगृच्छतु ॥**

**इममूर्णायुं वरुणस्य नाभिं त्वचं पशूनां द्विपदां चतुष्टपदाम्,**
**त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हिंसीः परमे व्योमन्**
**उष्ट्रमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद**
**उष्ट्रं ते शुगृच्छतु यं द्विष्मन्तं ते शुगृच्छतु ॥**

**अजो ह्यग्नेरजनिष्ट शोकात्सो अपश्यज्जनितारमग्रे**
**तेन देवा देवतामग्रमायँस्तेन रोहमायन्नुप मेध्यासः**
**शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद**
**शरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥**[४]

एतेषु मन्त्रेषु द्विपात्, एकशफः, आरण्यपशुः, आरण्यगवयः, चतुष्पात्पशुः, आरण्यमुष्ट्रम्, अजः, आरण्यशरभः इत्यादीन् पशून् प्रति सङ्केतः क्रियते । अत्र एकशफाः भवन्ति- अश्व-गर्दभादयः । तत्र ये आरण्यपशवो भवन्ति जनसमाजस्य हानिकारकाः, तेभ्यः मुक्तिं प्राप्तुम् अग्निदेवाय निवेदनं क्रियते । तैत्तिरीयसंहितायाम् (४/२/१०/१-४); काठकसंहितायाम् (१६/१७); मैत्रायणीसंहितायाम् २/७/१७; शतपथब्रह्मणे ६/२/१/२ च पञ्चप्रकाराणां पशूनां सूचना प्राप्यते। यथा – गौ, अश्वः, पुरुषः, अजः, अविश्च । मैत्रायणी-काठकसंहितयोः पशूनां ग्राम्यारण्याख्यं भेदद्वयं सङ्केतितम् । यजुर्वेदे (३१/६), ऋग्वेदे १०/९०/८) च पशूनां त्रिधा विभागः प्राप्यते । यथा – वायव्यपशुः, आरण्यपशुः, ग्राम्यपशुश्चेति । यथा -

**तस्माज्जज्ञात्सर्वहुः सम्भृतं पृषदाज्यम् । पशूँस्ताँचक्रे वायव्यारण्या ग्राम्याश्च ये ॥**[५]

शतपथब्रह्मणे पञ्चपशूनां विषये उल्लेखः वर्तते । यथा – पुरुषः, अश्वः, गौ, अजः, अविश्च । अपि च "पश्यन्तीति पशवः" इति तस्य व्युत्पत्तिरपि उपन्यस्यते । यथा -

**एतान् पञ्च पशून् अपश्यत् । पुरुषमश्वं गामविमजम् । यदपश्यत् तस्मादेते पशवः ।**[६]

तत्रैव शतपथब्राह्मणे सप्त ग्राम्यपशूनां तथा सप्तारण्यपशूनां नामानि प्रोक्तानि।[७] ऐतरेयब्राह्मणेऽपि (२/१७) एतादृशः विभागः कृतः । तत्र ग्राम्यपशवो यथा - अजः, अश्वः, गौ, महिषी, वाराही, हस्ती, अश्वतरी च । सायणाचार्यः एतैः पशुभिः सह पूर्वोक्तपञ्चपशूनां नामानि योजितवान् । यथा - पुरुषः, अश्वः, गौ, अजः, अविः, गर्दभश्च । एवमाधुनिकाः पशुविशेषज्ञाः अपि तथैव विभाजनं प्रदर्शयन्ति । तेषु प्रो.त्सिमरमहोदयाः सप्त ग्राम्यपशून् स्वीकृतवान् । यथा -

४ यजुः - १३/४७-५१

५ यजु. ३१/६

६ शत. ६/२/१/२

७ शत.३/८/४/१६

अजः, अविः, वृषभः, अश्वः, श्वा, गर्दभः, उष्ट्रश्च । सप्तारण्यपशुषु ताण्ड्यब्राह्मणाधारेण (६/८/८) मृगः (सिंहः), गोमायुः, गवयः, उष्ट्रः, शरभः, हस्ती, मर्कटः इत्येते गृह्यन्ते । अत्र अष्टशफविशिष्टजीवानामुल्लेखोऽपि वर्तते ।[८]

वेदादिषु पशुधनस्य महत्त्वविषयेऽपि बहवः विषयाः उल्लिखितास्सन्ति । पशुः दिव्यलक्ष्मीति (हरिश्रीः) उच्यते ।[९] शतपथब्राह्मणे ताण्ड्यब्राह्मणे च पशुधनं श्रीः, लक्ष्मीः, ऐश्वर्यम्, धनम्, रायस्पोषः (धनवैभवम्) इत्यादिभिः नामभिः उल्लिख्यते ।[१०] गोपथब्राह्मणे पशवः यशसः, वैभवस्य च आधारभूताः भवन्तीति उच्यते ।[११] धेन्वादिपशवः दुग्ध-घृतादीनां साधनानि भवन्तीति हेतोः तेषामपरं नाम् "घृतश्चुत्" इत्यपि भवति ।[१२] बलीवर्दादयः पशवः अन्नसमृद्धेः साधनानि भवन्ति । मनुष्याः देवगणाश्च सर्वे पशुधनेन जीविताः भवन्ति । पशवः तृणं भक्षयित्वा दुग्धामृतं ददति । पशुधनं सर्वासां कामनानां पूरणं करोति । उच्यते च –

- षोडशकलाः पशवः ।[१३]

- उभये देवमनुष्याः पशून् उपजीवन्ति ।[१४]

- पशवो वै महः ।[१५]

- सर्वं पशुभिर्विन्दते ।[१६]

पशूनां संरक्षणार्थमपि वेदेषु ब्राह्मणग्रन्थेषु च विविधाः मन्त्राः उल्लिखिताः वर्तन्ते । यजुर्वेदे उच्यते– "अभयं नः पशुभ्यः" (३६.२२) । अर्थात् सर्वेऽपि पशवः निर्भयाः विचरणं कुर्वन्तु । गौः, ऋषभः, मयूरः, शुकः, कोकिलः, उलूकः, श्येनः, उष्ट्रः, अश्वतरः, हंसः इत्यादीनां पशुपक्षिणां विषयेऽपि वेदेषु नैकानि महत्त्वपूर्णानि तथ्यानि प्राप्यन्ते । यथा –

८ तां.ब्र.१५/१/८

९ तां.ब्र. १५/३/१०

१० शत.१.८.१.३६;

११ शत.१२.८.३.१ ; ८.२.३.१४ ; ताण्ड्य.१३.२.२ ; ७.१०.१७ ; गोपथ.उ.५.६

१२ ताण्ड्य. ९.१.१७

१३ ताण्ड्य - ३.१२.२

१४ शत. ६/४/४/२२

१५ शत.११.८.१.३.

१६ ताण्ड्य - १३.१.३

- शारिः पुरुषवाक्, शुकः पुरुषवाक् ।[१७]

- आनृत्यतः शिखण्डिनः ।[१८]

- कामाय पिकः ।[१९]

- श्येनमायिनं मनोजवसम् ।[२०]

- सोममद्भ्यो व्यपिबत् ... हंसः ।[२१]

- अद्भ्यः क्षीरं व्यपिबत् क्रुङ् ।[२२]

शास्त्रेषु "एकशफवत्त्वमश्वत्वम्", "गलकम्बलविशिष्टत्वं गौ", "कम्बुग्रीवमान् मनुष्यः" इत्येवं प्रकारेण लक्षणानि प्राप्यन्ते । पालकाप्यमुनिविरचिते गजशास्त्रे गजानामुत्पत्तिः, लक्षणम्, भेदाः इत्यादिविषये च विस्तृता चर्चा क्रियते । तत्राष्टगजानां नामान्युल्लिख्यन्ते । यथा – ऐरावतः, पुण्डरीकपिलः, पुष्पदन्तताम्रकर्णी, वामनाङ्गनः, सुप्रतिकानुपमः, अञ्जनः, सार्वभौमशुभ्रदन्ती, कुमुदपिङ्गलश्चेति । गजस्य प्रत्येकमङ्गे देवतानिवासः इति तत्र गजशास्त्रस्याभिमतम् । यथा -

**ब्रह्मा मूर्ध्नि गले शक्रः स्कन्धे विष्णुरपि स्थितः।**
**अग्निर्नाभौ रविर्दंष्ट्र्यां मृत्युः पादेषु दन्तिमान् ॥**

**धरा विशाला वक्षस्सु मेढ्रे चाथ प्रजापतिः ।**
**हस्ते तु नागास्तिष्ठन्ति सर्वलोकधुरन्धराः ॥**

**पार्श्वयोरश्विनौ श्रोत्रे दिशो मनसि चन्द्रमा ।**
**अङ्गोपाङ्गेषु वेदाश्च बुद्धौ शम्भुर्व्यवस्थितः ॥**

**पर्जन्यो हृदि नागानामिति देवगणाः स्मृताः ॥**[२३]

सम्पूर्णे गजशास्त्रे बहूनां गजानां लक्षणानि प्रोक्तानि, तेषु भद्र-मन्द-मृग-सङ्कीर्णगजलक्षणानि, नानासत्त्वयुक्तगजलक्षणानि, देशभेदभिन्नगजलक्षणानि इत्यादयः सन्ति । यथा - भद्रजातिगजः,

१७ यजु.२४.३३
१८ ऋग्.३.४५.१
१९ यजु.२४.३९
२० तैत्ति.सं.२.४.७.१
२१ यजु.११.७४
२२ यजु.१९.७३
२३ ग.शा. - २/६१-६४

अनुभद्रजातिगजः, मन्दजातिगजः, सङ्कीर्णजातिजगतः, भद्रमन्दमिश्रगजः, भद्रमृगमिश्रगजः, मन्दभद्रमिश्रगजः इत्यादयः । तत्र केचन गजाः यज्ञार्हाः, केचन च युद्धार्हाः इत्युक्ताः ।

अश्वलक्षणविषये अग्निपुराणे शालिहोत्रेण उच्यते -

**अश्वानां लक्षणं वक्ष्ये चिकित्सां चैव सुश्रुतः ।**
**हीनदन्तो विदन्तश्च करालः कृष्णातालुकः ॥**

**कृष्णजिह्वश्च यमजोऽजातमुष्कश्च यस्तथा ।**
**द्विशफश्च तथा शृङ्गी त्रिवर्णो व्याघ्रवर्णकः ॥**

**खरवर्णो भस्मवर्णो जातवर्णश्च काकुदी ।**
**श्वित्री च काकसादी च स्वरसारस्तथैव च ॥**

**कृष्णप्रोथश्च शूकश्च यश्च तित्तिरिसन्निभः ।**
**विषमः श्वेतपादश्च धृवावर्तविवर्जितः ॥**

**अशुभावर्तसंयुक्तो वर्जनीयस्तुरङ्गमः ।**
**रन्ध्रेपरन्ध्रयोर्द्वौ द्वौ द्वौ मस्तकवक्षसोः ॥**

**प्रायेण च ललाटे च कण्ठावर्ताः शुभा दश ।**
**सृक्कण्यां च ललाटे च कर्णमूले निगालके ॥**

**बाहुमूले गले श्रेष्ठा आवर्तास्त्वशुभा परे ।**
**शुकेन्द्रगोपचन्द्राभा ये च वायससन्निभाः ॥**

**सुवर्णवर्णाः स्निग्धाश्च प्रशस्थास्तु सदैव हि ।**
**दीर्घग्रीवाक्षिकूटाश्च ह्रस्ववर्णाश्च शोभनाः ॥**

**राज्ञां तुरङ्गमा यत्र विजयं वर्जयेत्ततः ॥**[२४]

पशुपक्षीणां भेदविषये श्रीमद्भागवतमहापुराणे तृतीयस्कन्धे दशमाध्याये मैत्रेयविदुरसंवादे समीचीन उल्लेखः प्राप्यते । तत्र मैत्रेयमतानुसारेण पशुपक्षिणः अष्टाविंशतिविधाः भवन्ति । तेषां लक्षणं यथा - अज्ञानाः, तामसिकाः, घ्रणाज्ञाः, हृद्यवेदिनश्च । प्रकाराः यथा – गौरजः, महिषः, कृष्णसारमृगः, सूकरः, गवयः, रुरुः, अविः, ऊष्ट्रः इत्येते 'द्विशफाः' पशवः सन्ति । खरः, अश्वः, अश्वतरः, गौः, शरभः, चमरी च एते 'एकशफाः' पशवः उच्यन्ते । श्वा, शृगालः, वृकः, व्याघ्रः, मार्जारः, शशः, शल्लकः, सिंहः, कपिः, गजः, कूर्मः, गोधा च एते 'पञ्चनखाः" पशवः सन्ति ।

२४ श्री.अ.म.पु. - २८/१-९

पक्षिणः यथा – कङ्क-गृध्र-वट-श्येन-भास-भल्लूक-वर्हि-हंस-सारस-चक्राह्व-काकोल्कादयः वर्तन्ते । यथोक्तं श्रीमद्भागवते[२५] –

**तिरश्चाष्टमः सर्गः सोऽष्टाविंशद्विधो मतः । अविदो भूरितमसो घ्रणाज्ञा हृद्यवेदिनः ॥**

**गौरजो महिषः कृष्णः सूकरी गवयो रुरुः । द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तमः ॥**

**खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा । एते चैकशफाः क्षत्तः शृणु पञ्चनखान् पशून् ॥**

**श्वा सृगालो वको व्याघ्रः मार्जारः शशशल्लकौ । सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः ॥**

**कङ्कगृध्रवटश्येनभासभल्लूकवर्हिणः । हंससारसचक्राह्वकाकोलूकादयः खदाः ॥**

पद्मपुराणे सृष्टिखण्टे पञ्चमाध्याये यदा दक्षमहाराजः यज्ञस्यायोजनं कृतवान् तत्र सकलायाः ब्राह्मीसृष्टेः निमन्त्रणं तेन कृतम् । प्रसङ्गात् तत्र पशूनां भागद्वयस्योल्लेखः कृतः । यथा – "ग्राम्यपशवः" (Domestic Animals) , "आरण्यपशवः" (Wild Animals) इति । तदुक्तम्-

**ग्राम्यारण्याश्च पशवो यदिङ्गं यच्च नेङ्गति ।**[२६]

नारदपुराणे पूर्वार्धे त्रिषष्टितमेऽध्याये सनत्कुमारेण भागवततन्त्रप्रतिपादनावसरे शैवानां पशुः, पाशः, पतिः इति तत्त्वत्रयस्योल्लेखः क्रियते । तत्र पतिरेक एव शिवः, जीवाः पशवः इति कथ्यन्ते । पाशः कर्मबन्धनम् । तत्र पशूनां त्रैविध्यं प्रोक्तं यथा –

**पशवस्त्रिविधाश्चापि विज्ञाताः कलसंज्ञिकाः ॥ तलपाकलसंज्ञश्च सकलश्चेति नामतः ।**

**तत्राद्यो मलसंयुक्तो मलकर्मयुतः परः ॥ मलमाकर्मयुतस्तृतीयः परिकीर्त्तितः ।**[२७]

लिङ्गपुराणे पूर्वभागे सप्ततितमेऽध्याये जीवसृष्टिविषये पश्वादीनां भेदसन्दर्भे च नैकानि तथ्यानि प्राप्यन्ते । यथा –

**अष्टस्वेतासु सृष्टासु देवयोनिषु स प्रभुः । ततः स्वच्छन्दतोऽन्यानि वयांसि वयसाऽसृजत् ॥**

**स्वच्छन्दतः स्वच्छन्दांसि वयसा च वयांसि च । पशून्सृष्ट्वा स देवेशोऽसृजत्पक्षिगणानपि ॥**

**मुखतो जाः ससर्जाथ वक्षसश्चावयोऽसृजत् । गाश्चैवाथोदराद् ब्रह्मा पार्श्वाभ्यां च विनिर्ममे ॥**

**पद्भ्यां चाश्वान् समातङ्गान् रासभानावयान्मृगान् । उष्ट्रानश्वतरांश्चैव तथान्याश्चैव जातयः ॥**

---

२५ श्री.भा. - ३/१०/२०-२४

२६ प.पु. - ५/२६

२७ ना.पु. पू. - ६३/१६-१८

**ओषध्यः फलमूलिन्यो रोमभ्यस्तस्य जज्ञिरे । एवं पश्वोषधीः सृष्ट्वाऽयूयुजत्सोध्वरे प्रभुः ॥**[२८]

एवं प्रकारेण पशूनां सृष्टिसन्दर्भे उक्त्वा तेषां भेदाः अपि अत्र उल्लिखिताः । तदुच्यते -

**गौरजः पुरुषो मेषो ह्यश्वोऽश्वतरगर्दभौ । एतान् ग्राम्यान् पशूनाहुरारण्यान्वै निबोधत ॥**

**श्वापदो द्विखुरो हस्ती वानराः पक्षिपञ्चमाः । औदकाः पशवः षष्ठाः सप्तमास्तु सरीसृपाः ॥**

**महिषा गवयश्चाक्षाश्च प्लवङ्गाः शरभा वृकाः । सिंहस्तु सप्तमस्तेषामारण्याः पशवः स्मृताः ॥**[२९]

विष्णुपुराणेऽपि एतेषामुल्लेखः प्राप्यते । अविशेषेण सर्वं पश्यतीति पशुः । पशयन्ति पश्यन्ति पार्श्वहस्ताभ्यां हिताहितमिति पशुरिति भरतेनोक्तम् । पशोः लक्षणं वाचस्पत्ये एवमुक्तम् – "लोमवल्लाङ्गूलवत्त्वम्" इति भाषारत्ने कणादः । तस्य भेदाः एवं सन्ति – सिंहः, व्याघ्रः, तरक्षुः, वराहः, कपिः, भल्लूकः, खड्गी, महिषः, शृगालः, विडालः, गोधा, श्वावित्, हरिणः, कृष्णसारः, रुरुः, न्यङ्कुः, रङ्कुः, शम्बरः, रौहिषः, गोकर्णः, पृषतः, एणः, ऋष्यः, रोहितः, चमरः, गन्धर्वः, शरभः, रामः, सृमरः, गवयः, शशः, खट्टाशः, गौः, उष्ट्रः, छागः, मेषः, खरः, हस्ती, अश्वः । एतानि सर्वाण्यपि पशुनामानि अमरकोषे प्रोक्तानि । वाचस्पत्यमतानुसारेण एते पशवः ग्राम्यारण्यभेदेन चतुर्दशविधाः सन्ति । यथा -

(१) ग्राम्याः – गोरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्यश्चेति सप्त ग्राम्याः पशवः ।

(२) आरण्याः –– महिषवानरषाक्षसरोस्वपरुरुपृषतमृगाश्चेति सप्तारण्याः पशवः ।

यज्ञपार्श्वमतानुसारेण-

**उष्ट्रो वा यदि वा मेषश्छागो वा यदि वा हयः । पशुस्थाने नियुक्तानां पशुशब्दोऽभिधीयते ॥**

एवं संस्कृतसाहित्ये विशिष्टतया ग्रामारण्यपशूनां विषये विविधाः सूचनाः प्रदत्तास्सन्ति । तत्र पशुषु गौ सर्वश्रेष्ठगृहपालितपशुरूपेण गण्यते । यथा रामायणे युद्धकाण्डे उच्यते -

**विद्यते गोषु सम्पन्नं विद्यते ज्ञातितो भयम् ।**[३०]

एवं कालिदासादिसाहित्येषु अपि नैकानां पशुपक्षिणां नामानि उट्टङ्कितानि वर्तन्ते प्रबन्धवृद्धिभयात्तेषां नामानि अत्र नोपस्थापितानि । विशिष्टतया अथर्ववेदे प्रतिपादितानां पशुपक्षिविषयक-वैज्ञानिकतत्त्वानां मन्त्रोद्धरणपूर्वकं परिशीलनमत्र किञ्चित् क्रियते ।

२८ लि.पु. - ७०/२३५-२४०

२९ लि.पु.पूर्वार्धे - ७०/१४१-१४३

३० रामा.यु.का. - ६/१६/९

**अथर्ववेदे प्राणिविज्ञानसम्बन्धिनः मन्त्राः**

अथर्ववेदस्य द्वितीयकाण्डे षड्विंशं सूक्तं **पशुसंवर्धनसूक्तनाम्ना** ज्ञायते । अत्र पशूनां सुनियोजनस्य मन्त्राः विद्यन्ते । अत्र पशुशब्देन प्राणिमात्रं ग्रहीतुं शक्यते । ये गवादयः ग्राम्यपशवो भवन्ति तेषां संरक्षणस्थानं गोष्ठं (आवासस्थलम्) इत्युच्यते । दिवा ते चारणार्थं वनं गच्छन्ति, सायंकाले गोधूलिसमये पुनः गोष्ठं प्रति प्रत्यागच्छन्ति । गोष्ठं प्रति सुरक्षिततरूपेण पशूनां समागमाय ऋषीणां प्रार्थना एतेषु मन्त्रेषु दृश्यते । मन्त्राः यथा –

**एह यन्तु पशवो ये परेयुर्वायुर्येषां सहचारं जुजोष ।**
**त्वष्टा येषां रुपधेयानि वेदास्मिन्तान्गोष्ठे सविता नि यच्छतु ॥**

**इमं गोष्ठं पशवः सं स्रवन्तु बृहस्पतिरा नयतु प्रजानन् ।**
**सिनीवाली नयत्वाग्रमेषामाजग्मुषो अनुमते नि यच्छ ॥**[३१]

गोष्ठं प्रति समागतानां पथभ्रान्तानां पशूनां सहकारिरूपेण वायुदेवस्य उल्लेखः अस्मिन् मन्त्रे क्रियते। त्वष्टा पशूनां नामरूपस्य ज्ञाता अस्ति । बृहस्पतिः तेषामानयनविधिं जानाति । सिनीवाली, अनुमतिः इत्येते सुरक्षिततरूपेण गवां गोष्ठं प्रति आनयनकार्यं सम्पादयन्तु इति ऋषिभिः प्रार्थ्यते । अपि च –

**सं सं स्रवन्तु पशवः समश्वाः समु पूरुषाः।**
**सं धान्यस्य या स्फातिः संस्राव्येण हविषा जुहोमि ॥**[३२]

अस्मिन् मन्त्रे गावः, अश्वाः अन्ये च पशवः मनुष्यैस्सह मिलित्वा चलितुं सूचना दीयते । पशुभिः धान्यादीनां वृद्धिर्भवतु इति निवेद्यते । यथा च -

**सं सिञ्चामि गवां क्षीरं समाज्येन बलं रसम् ।**
**ससिंक्ता अस्माकं वीरा ध्रुवा गावो मयि गोपतौ ॥**[३३]

अस्मिन् मन्त्रे गवां दुग्धस्य महत्त्वमुररीक्रियते । वीरपुत्राणां गोजातद्रव्यैः घृतादिभिः पुष्टिविषये तथा च गोपतिभिस्साकं तासां मेलनविषयेऽपि सूचना अत्र प्रदत्ताऽस्ति ।

**कृमिजम्भनसूक्तम् -**

३१ अ.वे. २/२६/१-२
३२ तत्रैव - २/२६/३
३३ तत्रैव - २/२६/४

अथर्ववेदस्य द्वितीयकाण्डे एकत्रिंशत्तमं सूक्तं कृमिजम्भनसूक्तमिति उच्यते । अस्मिन् सूक्ते जीवजगति विद्यमानानाम् अदृष्टकीटानां विषये सूच्यते । यथा प्रस्तरेण चणकपेषणं भवति, तथैव एते अदृष्टानि कीटानि अस्माभिः पेष्यन्ते । यानि हानिकारकाणि कीटानि भवन्ति तेषां विनाशो भवतु इति स्तूयते ऋषिभिः । यथा –

**इन्द्रस्य या मही दृषत् क्रिमेर्विश्वस्य तर्हणी । तया पिनष्मि सं क्रिमीन् दृषदा खल्वाँ इव ॥**[३४]

अदृष्टानामेतेषां कीटानां प्रकारभेदा अपि अत्र उक्ताः । यथा कानिचन कीटानि भूमौ चलन्ति, कानिचन शय्यायां निवसन्ति । कानिचन कीटानि चलन्ति, कानिचन च स्थिरतया एकत्र तिष्ठन्ति । केचन कीटाणवः शुष्काः म्रीयन्ते । अन्ये येऽवशिष्टाः द्रुतगत्या इतस्ततः भ्रमणीशीलाः तेषां विनाशः अस्माभिः मन्त्रशक्त्या क्रियते। केषाञ्चन कीटाणूणां निवासः अन्त्रे, शिरसि, शिरासु भवति। सर्पणं कृत्वा गमनशीलाः केचन कीटाणवो भवन्ति । वनेषु, पर्वतेषु, ओषधिषु, पशुषु, जले च केचन कीटाणवः निवसन्ति । एतेषां सर्वेषामपि हानिकारककीटाणूनां विनाशो भवतु इति प्रार्थ्यते वैदिकैः ऋषिभिः । यथा –

**दृष्टमदृष्टमतृहमथो कुरूरुमतृहम् ।**
**अल्गण्डून्त्सर्वाञ्छलुनान् क्रिमीन् वचसा अम्भयामसि ॥**

**अल्गण्डून् हन्मि महता वधेन, दूना अदूना अरसा अभूवन् ।**
**शिष्टानशिष्टान् नि तिरामि वाचा, यथा क्रिमीणां नकिरुच्छिषातै ।**
**अन्वान्त्र्यं शीर्षण्यमथो पार्ष्टेयं क्रिमीन् । अवस्कवं व्यध्वरं क्रिमीन् वचसा जम्भयामसि ॥**

**ये क्रिमयः पर्वतेषु वनेष्वोषधीषु पशुष्वप्स्वन्तः ।**
**ये अस्माकं तन्ममाविविशुः सर्वं तद्धन्मि जनिम क्रिमीणाम् ॥**[३५४३]

अत्रैव द्वितीयकाण्डस्य द्वात्रिंशे **कृमिनाशनसूक्ते** कृमीनां पुनः प्रकारभेदाः प्रोक्ताः । यथा - (१) विश्वरूपकृमिः (२) चतुरक्षकृमिः (३) सारङ्गकृमिः (४) अर्जुनकृमिः (श्वेतवर्णयुक्तः) इति। यथा-

**विश्वरूपं चतुरक्षं कृमिं सारङ्गमर्जुनम् । शृणाम्यस्य पृष्टीरपि वृश्चामि यच्छिरः ॥**[३६४४]

द्वितीयमण्डलस्य चतुस्त्रिंशत्तमे सूक्ते द्विपदां चतुष्पदां च जीवानां विषये उल्लेखः क्रियते । तत्र शिवः पशुपतिरूपेण निर्दिश्यते । मनुष्याणां सर्वेषां पशूनां च अयं स्वामी भवति । यथा -

**य ईशे पशुपतिः पशूनां चतुष्पदामुत यो द्विपदाम् ।**

---

३४ अ.वे. - २/३१/१

३५ अ.वे. - २/३१/२-५

३६ तत्रैव - २/३२/२

**निष्क्रीतः स यज्ञियं भागमेतु रायस्पोषा यजमानं सचन्ताम् ॥**[३७४5]

तत्रैव जीवयोः दृष्टादृष्टभेदद्वयमुच्यते । आलोकमन्तः जीवाः बद्धजीवान् मनसा चक्षुषा च अवलोकयन्ति । तदुच्यते –

**ये बध्यमानमनु दीध्याना अन्वैक्षन्त मनसा चक्षुषा च ।**

**अग्निष्टानग्रे प्र मुमोक्तु देवो विश्वकर्मा प्रजया संरराणः ॥**[३८४६]

तत्रापि अनेकविधानां ग्राम्यपशूनां भेदाः कल्पिताः । यथा – विश्वरूपाः (बहुरूपाः), विरूपाः (रूपहीनाः) इति । यद्यपि एते बहुरूपाः भवन्ति, तथापि तेषामेकरूपता तत्र प्रदर्शिता । प्रजाभिस्सह तेषां निवासो भवति । तदुच्यते –

**ये ग्राम्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः ।**

**वायुष्टानग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया संरराणः ॥**[३९४७]

तृतीयकाण्डे चतुर्दशे सूक्ते पशुशालायाः विषये उल्लेखः क्रियते, यत्र पशवः सुरक्षिताः तिष्ठन्ति । सूक्तमिदं **गोष्ठसूक्तनाम्ना** उच्यते । विशिष्टतया अत्र गवां सुरक्षणार्थं निर्देशः क्रियते । तासां दुग्धं, दुग्धान्निष्पन्नानां घृतादीनां च ऐश्वर्यप्रदायकत्वेन साधकानां पुष्टिसम्पादनाविषये प्रार्थ्यते । गवां वंशवृद्धिर्भवतु, चिरकालं यावत् ताः जीवितास्सन्तु । गोमयं ताः उत्पादयन्त्यः नीरोगाः मधुरसौम्यदुग्धधारणं विधाय अस्माकं समीपे तिष्ठन्तु । गोष्ठेषु निरापत्तया आगच्छन्तु । गोशाला तासां कृते कल्याणकारिणी भवतु इत्यादिभिः वचोभिः गोमाता बहुधा स्तूयते । यथा –

**सं वो गोष्ठेन सुषदा सं रय्या सं सुभूत्या । अहर्जातस्य यन्नाम तेना वः सं सृजामसि ॥**

**सं वः सृजत्वर्यमा सं पूषा सं बृहस्पतिः । समिन्द्रो यो धनंजयो मयि पुष्यत यद्वसु ॥**

**संजग्माना अबिभ्युषीरस्मिन्गोष्ठे करीषिणीः । बिभ्रतीः सोम्यं मध्वनमीवा उपेतन ॥**

**इहैव गाव एतनेहो शकेव पुष्यत । इहैवोत प्र जायध्वं मयि संज्ञानमस्तु वः ॥**

**शिवो वो गोष्ठो भवतु "शारिशाके"व पुष्यत । इहैवोत प्र जायध्वं मया वः सं सृजामसि ॥**

**मया गावो गोपतिना सचध्वमयं वो गोष्ठ इह पोषयिष्णुः ।**

**रायस्पोषेण बहुला भवन्तीर्जीवा जीवन्तीरुप वः सदेम ॥**[४०४८]

---

३७ तत्रैव - २/३४/१

३८ तत्रैव - २/३४/३

३९ अ.वे. २/३४/४

४० अ.वे. - ३/१४/१-६

सूक्तेऽस्मिन् **"शक"** (मक्षिका), तथा **"शारिशाक"** इति नाम्ना द्वयोः जीवयोः सूचना दीयते, यौ क्षीप्रवेगेन तेषां वंशवृद्धिं कुरुतः । यथा एतयोः जीवयोः वंशवृद्धिः तरसा जायते, तथैव गवामपि वंशवृद्धिर्भवतु इति ऋषीणां निवेदनमत्र प्रस्तूयते ।

तृतीयमण्डले अष्टाविंशं सूक्तं **पशुपोषणसूक्त**नाम्नाऽभिहितमस्ति । अत्र पशूनां संरक्षणविषये स्तुतिः विधीयते । अस्य मन्त्रस्य देवता यामिनी भवति । यामिनी नियामकशक्तिः, अन्तःबाह्यप्रकृतिसम्पन्ना इति व्याख्यायते । कुत्रचित् युगलवत्सतरीजननी गौ यामिनीति उच्यते । उत्तमभावैः, विचारैः, कर्मभिश्च लोके जनाः पशवश्च स्थित्वा हिंसकाः न भवितुं निवेदनमत्र क्रियते । यामिनी यदा ऋतुकालीनभिन्नपरिणामं जनयति, तदा पीडा उत्पद्यते, पशवः नश्यन्ति, सर्वे च कष्टं प्राप्नुवन्ति । यामिनी क्रूरा सती पशून् नाशयति । यथोच्यते –

**एकैकयैषा सृष्ट्या सं बभूव यत्र गा असृजन्त भूतकृतो विश्वरूपाः ।**
**यत्र विजायते यमिन्यपर्तुः सा पशून्क्षिणाति रिफती रुशती ॥**

**एषा पशून्त्सं क्षिणाति क्रव्याद्भूत्वा व्यद्वरी । उतैनां ब्रह्मणे दद्यात्तथा स्योना शिवा स्यात् ॥**[४१]

यामिन्याः सन्तुष्ट्यर्थम् ऋषिभिः उच्यते – हे यामिनि ! भवती मनुष्याणां गवाम्, पशूनाञ्च कल्याणकारिणी भव । समग्रभूमण्डलस्य कल्याणं विधाय सुखदायिनी भव । अस्मिन् क्षेत्रे रसस्य वृद्धिर्भवतु । पशूनां पोषणं भवतु । पशूनां हिंसा न भवतु । तदुच्यते मन्त्रेषु –

**शिवा भव पुरुषेभ्यो गोभ्यो अश्वेभ्यः शिवा । शिवास्मै सर्वस्मै क्षेत्राय शिवा न इहैधि ॥**

**इह पुष्टिरिह रस इह सहस्रसातमा भव । पशून्यमिनि पोषय ॥**

**यत्रा सुहार्दः सुकृतो मदन्ति विहाय रोगं तन्वः स्वायाः ।**
**तं लोकं यमिन्यभिसंबभूव सा नो मा हिंसीन्पुरुषान्पशूंश्च ॥**

**यत्रा सुहार्दां सुकृतामग्निहोत्रहुतां यत्र लोकः ।**
**तं लोकं यमिन्यभिसंबभूव सा नो मा हिंसीत्पुरुषान्पशुंश्च ॥**[४२]

चतुर्थकाण्डे एकविंशे सूक्ते गवां सुरक्षादिविषये प्रतिपाद्यते । गावः गोशालायां स्थित्वा विविधवर्णयुक्तवत्सतरीभिः साकं मानवानं कल्याणं कुर्वन्तु, उषःकाले इन्द्रपूजनार्थं दुग्धं ददतु ; इति निवेद्यते। यथा -

**आ गावो अग्मन्नुत भद्रमक्रन्त्सी-दन्तु गोष्ठे रणयन्त्वस्मे ।**

---

४१ तत्रैव - ३/२८/१-२

४२ अ.वे. ३/२८/३-६

**प्रजावतीः पुरुरूपा इह स्यु- रिन्द्राय पूर्वीरुषसो दुहानाः ॥[४३]**

गावः कदापि न नश्यन्ति । चोराः तासां हानिं कर्तुं न शक्नुवन्ति । शत्रूणामस्त्राणि तासां समीपे निरस्तानि जायन्ते । गोपालकाः याभिः गोभिः देवयजनं कुर्वन्ति, ताभिः साकं ते चिरकालं यावत् सुखिनो तिष्ठन्ति । तदुच्यते –

**न ता नशन्ति न दभाति तस्करो नासामामित्रो यथिरा दधर्षति ।**

**देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह ॥[४४]**

गवां संहारार्थं निषेधोऽपि अत्र क्रियते । याजकानां गावः निर्भयतया विचरणार्थं निवेद्यते । यथा –

**न ता अर्वा रेणुककाटोऽश्नुते न संस्कृतत्रमुप यन्ति ता अभि ।**

**उरुगायमभयं तस्य ता अनु गावो मर्तस्य वि चरन्ति यज्वनः ॥[४५]**

अन्येषु मन्त्रेषु गावः अस्माकं धनोपार्जनस्य साधनभूताः भवन्ति । गोदुग्धस्य मिश्रणं सोमरसेषु क्रियते । गावः इन्द्ररूपाः सन्ति । एताः अस्माकं रुग्णकृशशरीरं स्वस्थं सुन्दरं च कुर्वन्ति । तासां कल्याणकारी ध्वनिः गृहं पवित्रीकरोति । यज्ञमण्डपेषु तद्वाराप्राप्तानामन्नानामेव यशोगानं क्रियते । ताः तृणानि खादन्ति स्वच्छजलञ्च पिबन्ति इत्येवं नैके विषयाः ज्ञातुं शक्यन्ते । एतासां संरक्षणार्थं पुनः पुनश्च निवेदनं क्रियते ।

**गावो भगो गाव इन्द्रो म इच्छाद् गावः सोमस्य प्रथमस्य भक्षः ।**

**इमा या गावः स जनास इन्द्र इच्छामि हृदा मनसा चिदिन्द्रम् ॥**

**यूयं गावो मेदयथा वशं चिद-श्रीरं चित्कृणुथा सुप्रतीकम् ।**

**भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु ॥**

**प्रजावतीः सूयवसे रुशन्तीः शुद्धा अपः सुप्रपाणे पिबन्तीः ।**

**मा व स्तेन ईशत माघशंसः परि वो रुद्रस्य हेतिवर्णक्तु ॥[४६]**

षष्ठकाण्डस्य द्विपञ्चाशत्तमे भैषज्यसूक्ते वन्यजीवानां गृहपोषितगवाञ्च निर्भयतया क्रमशः वने गृहगोष्ठे च निवासस्य सूचना दीयते । यथा -

४३ अ.वे. ४/२१/१

४४ तत्रैव - ४/२१/३

४५ तत्रैव - ४/२१/४

४६ अ.वे. - ४/२१/५-७

**नि गावो गोष्ठे असदन्नि सृगासो अविक्षत । न्यूर्र्मयो नदीनां न्यदृष्टा अलिप्सत ॥** [४७]

सप्तमे काण्डे १०९ सूक्ते अथर्वणे वरुणेन प्रदत्तानां विविधवर्णयुक्तानां, दुग्धप्रदात्रीणां वत्सतरीयुक्तानां संरक्षणार्थं निवेदनं क्रियते । यथा –

**कः पृश्निं धेनुं वरुणेन दत्ता-मथर्वणे सुदुघां नित्यवत्साम् ।**

**बृहस्पतिना सख्यं जुषाणो यथावशं तन्वः कल्पयति ॥** [४८]

नवमकाण्डे चतुर्थसूक्तम् **"ऋषभसूक्तम्"** इति नाम्नाऽभिहितम् । अत्र ऋषभो देवता भवति । ऋषभस्यार्थो भवति बलीवर्दो वा गोपतिः । गोधनस्य, गोजातद्रव्याणां दुग्ध-घृतादीनां संवर्धनस्य विषये मन्त्रेऽस्मिन् प्रतिपाद्यते । ऋषभस्य दिव्यत्वं महत्त्वञ्च उल्लिख्यते । मन्त्राणां परिशीलनेन ज्ञायते यत् अयम् ऋषभः प्रकृतौ उपलब्धस्य सेचनसामर्थ्ययुक्तदिव्यप्रवाहस्य बोधको भवति । अयं न केवलं ऋषभो वा वृषभ इति अत्र वर्ण्यते, अपि तु जलौषधिघृतरसादिरूपेणापि उट्टङ्क्यते । अस्यैव शरीरं मेघं निर्मातीति उल्लिख्यते। यथा -

**साहस्रस्त्वेष ऋषभः पयस्वान्विश्वा रूपाणि वक्षणासु बिभ्रत् ।**
**भद्रं दात्रे यजमानाय शिक्षन् बार्हस्पत्य उस्रियस्तन्तुमातान् ॥** [४९]

अस्मिन् मन्त्रे ऋषभः सहस्रसामर्थ्यवान् तेजस्वी पयस्वान् इति सम्बोध्यते । एष प्रकृतेः गवां वा स्वरूपेण विभिन्नानि रूपाण धृत्वाऽऽविर्भवति । बृहस्पतिदेवेन सह सम्बद्धोऽयं दिव्यः ऋषभः यजमानेभ्यः श्रेष्ठं शिक्षणं प्रददाति ।

**अपां यो अग्रे प्रतिमा बभूव प्रभूः सर्वस्मै पृथिवीव देवी ।**
**पिता वत्सानां पतिरघ्न्यानां साहस्रे पोषे अपि नः वृणोतु ॥** [५०]

मन्त्रेऽस्मिन् असौ ऋषभः सर्वादौ जलस्य प्रतिमा तथा पृथिवीवत्सर्वेषामुपरि प्रभुत्वविस्तारकः तथा च वत्सतरीणां पिता, तथा गवां स्वामी इत्युल्लिख्यते । एवमेवान्येषु मन्त्रेषु अयं पौरुषसम्पन्नः, विशालशरीरयुक्तः, पयस्वान्, वसोः (वासप्रदायकानाम्) उदरपोषक इति कथ्यते । अयं वत्सरूपेण, रक्षकजरायुजरूपेण, दुग्धामृतरूपेण, दधिरूपेण, घृतरूपेण तथा च अप्रत्यक्षरूपेण अस्य ऋषभस्य उत्पादकतेज एव विद्यते । यथा -

४७ तत्रैव - ६/५२/२

४८ अ.वे. - ७/१०९/१

४९ अ.वे. - ९/४/१

५० अ.वे. - ९/४/२

**पुमानन्तर्वान्त्स्थविरः पयस्वान् वसोः कबन्धमृषभो बिभर्ति ।**
**तमिन्द्राय पथिभिर्देवयानै- र्हुतमग्निर्वहतु जातवेदाः ॥**

**पिता वत्सानां पतिरघ्न्याना- मथो पिता महतां गर्गराणाम् ।**
**वत्सो जरायु प्रतिधुक्पीयुष आमिक्षा घृतं तद्वस्य रेतः ॥**[५१]

अयं वृषभः घृतधारणकर्ता रेतसः सेचनकर्ता च भवति । सहस्रपुष्टिप्रदातृत्वादयं यज्ञः इति कथ्यते । अयमेव इन्द्रस्य स्वरूपं स्वीकरोति । अतः हे देवगण ! अयं सर्वेषां कल्याणकारी भवतु इति ऋषिभिः निवेद्यते। यथा -

**आज्यं बिभर्ति घृतमस्य रेतः साहस्रः पोषस्तमु यज्ञमाहुः ।**
**इन्द्रस्य रूपमृषभो वसानः सो अस्मान्देवा शिव एतु दत्तः ॥**[५२]

यथा इन्द्रदेवः सर्वदा देवैस्सह समागच्छति, तथैव ऋषभोऽपि सर्वदा गोभिस्सह एव तिष्ठति । यथोच्यते –

**य इन्द्र इव देवेषु गोष्वेति विवावदत् । तस्य ऋषभस्याङ्गानि ब्रह्मा सं स्तौतु भद्रया ॥**[५३]

ऋषभस्य विविधेषु अङ्गेषु विविधाः देवतास्तिष्ठन्तीति सूच्यते । यथा – पार्श्वे अनुमतिदेवः, अनूवृजौ भगः, अष्ठीवन्तौ मित्रावरुणौ, कटिप्रदेशे आदित्यदेवः, श्रोण्यां बृहस्पतिः, पुच्छे वातः, गुदायाम् सिनीवाली, त्वचि सूर्यप्रभा, पादे उत्थाता, क्रोडे जामिशंसः, कलशसदृशे ककुदभागे सोमदेवः, कुष्ठिकायां सरमादेवः, खुरेषु कच्छपः, अपक्वान्त्रभागे च कीटाः इति ।

**पार्श्वे आस्तामनुमत्या भगस्यास्तामनूवृजौ । अष्ठीवन्तावब्रवीन्मित्रो ममैतौ केवलाविति ॥**

**भसदासीदादित्यानां श्रोणी आस्तां बृहस्पतेः । पुच्छं वातस्य देवस्य तेन धूनोत्योषधीः ॥**

**गुदा आसन्त्सिनीवाल्याः सूर्यायास्त्वचमब्रुवन् । उत्थातुरब्रुवन्पदऋषभं यदकल्पयन् ॥**

**क्रोड आसीज्जामिशंसस्य सोमस्य कलशो धृतः । देवाः संगत्य यत्सर्वमृषभं व्यकल्पयन् ॥**

**ते कुष्ठिकाः सरमायै कूर्मेभ्यो अदधुः शफान् । ऊबध्यमस्य कीटेभ्यः श्ववर्तेभ्यो अधारयन् ॥**[५४]

दशमकाण्डे नवमसूक्ते **"शतौदनागौ"**विषये उल्लेखो वर्तते । शतौदनायाः अर्थो भवति शतप्रकारकपरिपक्वाहारप्रदात्रीति । पयः, घृतम्, मधु इत्यादीनां प्रदात्री भवति गौ । व्यापकार्थे

---

५१ अ.वे. - ९/४/४

५२ तत्रैव - ९/४/७

५३ अ.वे. - ९/४/११

५४ तत्रैव - ९/४/१२-१६

शतौदना पृथिवी तथा प्रकृतिरपि अत्र गृह्यते । यथा पृथिवी, प्रकृतिर्वा मातृरूपेण विविधप्रकारेण जीवजगतः पोषणं करोति, तथैव गौरपि शतौदना सती विविधपुष्टिकराहाराणि ददाति । अस्याः शतौदनायाः गावः महत्त्वविषये सूक्तेऽस्मिन् सप्तविंशतिः मन्त्राः विद्यन्ते ।[५५]

दशमकाण्डे दशमसूक्ते **"वशागौ"** विषये उल्लेखः क्रियते । वशा नाम पोषणकर्त्री सूक्ष्म-प्रकृतिः । अस्माकं पर्यावरणस्य या सीमा प्रकृतिर्वर्तते, तावदस्माकं वशा प्रचलति । एषा एव अस्माकं जीवनचक्रं नियन्त्रयति । एषा वशा यज्ञोत्पन्नशक्तिप्रवाहरूपिणी पर्जन्यपत्नीति नाम्ना अपि उच्यते । गवां विशेषणत्वेन वशायाः उपस्थापना अत्र क्रियते । सा अहिंसनीया वशागौ सप्तजीवनप्रवाहानां, सप्तान्तःस्थानानां, यज्ञशिरसश्च ज्ञातारो ये भवन्ति तैरेव ग्रहणीया भवति । वशागावः महत्त्वविषये नैके अलौकिकाः विषयाः अत्र उट्टङ्किताः ।[५६]

द्वादशमण्डलेऽपि चतुर्थसूक्ते **वशागावः** महत्त्वविषये तेषां संरक्षणविषये च त्रिपञ्चाशन्मन्त्राः प्राप्यन्ते। गवां दानमाहात्म्यमत्रोच्यते । ये सद्गृहस्थाः अनुकूलभावया याचकब्राह्मणेभ्यः वशागावः दानं कुर्वन्ति तेषां प्रजाः सन्ततयश्च वर्धन्ते । ये खलु एतादृशं दानं न कुर्वन्ति, ते पशुहीनाः अपयशस्काः जायन्ते । यथोच्यते -

**ददामीत्येव ब्रूयादनु चैनामभुत्सत । वशां ब्रह्मभ्यो याचद्भ्यस्तत्प्रजावदपत्यवत् ॥**

**प्रजया स वि क्रीणीते पशुभिश्चोप दस्यति । य आर्षेयेभ्यो याचद्भ्यो देवानां गां न दित्सति ॥**[५७]

वशागावः शृङ्गं यदि त्रुट्यते, तर्हि तन्निकटवर्तिनः नष्टाः भवन्ति । तस्याः खञ्जत्वे सति गर्तपतनं जायते, पुच्छे विकले सति गृहे अग्निसंयोगो भवति, काणत्वे सति सम्पन्नश्यति । उच्यते च –

**कूटयास्य सं शीर्यन्ते श्लोणया काटमर्दति । बण्डया दह्यन्ते गृहाः काणया दीयते स्वम् ॥**[५८]

गावः गोमयेन रक्तज्वरः जायते, येन कृपणस्य स्वामिनो विनाशो भवति । एतदर्थं वशागौ दुरदभ्ना वा दुर्वमनीया इति कथ्यते । अर्थात् वशागौ शक्या दमनयोग्या न भवति । यत्र गावः खुरन्यासं कुर्वन्ति ततः "विक्लिन्दुः" नाम रोगः उत्पद्यते । यस्य घ्राणं गावः कुर्वन्ति । यथोच्यते -

**विलोहितो अधिष्ठानाच्छक्नो विन्दति गोपतीम् । तथा वशायाः संविद्यं दुरदभ्ना ह्युश्च्यसे ॥**

**पदोरस्या अधिष्ठानाद्विक्लिन्दुर्नाम विन्दति । अनामनात्सं शीर्यन्ते या मुखेनोपजिघ्रित ॥**[५९]

५५ अ.वे. - १०/९/१-२७

५६ तत्रैव - १०/१०/१-३४

५७ तत्रैव - १२/४/१-२

५८ अ.वे. - १२/४/३

५९ तत्रैव - १२/४/४-५

ये जनाः गवां कर्णयोः पीडां प्रयच्छन्ति ते देवतानामुपरि प्रहारं कुर्वन्तीति मन्यते । ये गवामुपरि परिचयचिह्नमुट्टङ्कयन्ति, तेषां धनं क्षीणं भवति । यः गृहसज्जीकरणार्थं गोकेशानां कर्तनं करोति, तस्य सन्तानानां मृत्युर्भवति इति उद्घोष्यते । यथा -

**यो अस्याः कर्णावास्कुनोत्या स देवेषु वृश्चते । लक्ष्म कुर्व इति मन्यते कनीयः वृणुते स्वम् ॥**

**यदस्याः कस्मै चिद्भोगाय बालान्कश्चित्प्रकृन्तति ।**
**ततः किशोरा म्रियन्ते वत्सांश्च घातुको वृकः ॥**[६०]

यदि गोपालस्य उपस्थितौ काकाः गवां केशानं चञ्चुना प्रहरन्ति, तर्हि तस्य सन्तानाः म्रियन्ते अथवा क्षयरोगेण ग्रस्ताः भवन्ति । यदि गोपरिचारिका गोमयं गोमूत्रं वा इतस्ततः निक्षिपति, तर्हि तस्याः पतिः विरूपो जायते । उक्तं च -

**यदस्या गोपतौ सत्या लोम ध्वाङ्क्षो अजीहिडत् ।**
**ततः कुमारा म्रियन्ते यक्ष्मो विन्दत्यनामनात् ॥**

**यदस्याः पल्पूलनं शवकृद्दासी समस्यति ।**
**ततोऽपरुपं जायते तस्माद्व्येष्यदेनसः ॥**[६१]

वशागावः ऊधं स्तनं च यः गोपालकः न जानाति, सः दानस्वरूपेण ताः दातुं सक्षमाः भवन्ति । तेन च वशागौ पुण्यफलेन सह पर्याप्तं दुग्धम् अभीष्टं फलं च ददाति । यथोक्तम् -

**यो अस्या ऊधो न वेदाथो अस्या स्तनानुत । उभयेनैवास्मै दुहे दातुं चेदशकद्वशाम् ॥**[६२]

पञ्चमकाण्डे तक्षकसर्वस्य विषनाशप्रसङ्गे त्रयोदशसूक्तं प्रवर्तते । तक्षकः सर्पप्रजातिषु अन्यतमो भवति । अस्य विषज्वाला अतीवासहनीया भवति । अतः वैदिकैरुच्यते -

**चक्षुषा ते चक्षुर्हन्मि विषेम हन्मि ते विषम् । अहे म्रियस्व मा जीवीः प्रत्यगभ्ये तु त्वा विषम् ॥**[६३]

अत्र सर्पाणां प्रकाराः, तेषां निवासस्थलानि अपि प्रतिपादितानि सन्ति । सर्पाः विविधप्रकारकाः भवन्ति - वनवास्तव्याः सर्पाः (कैराताः), चित्रविचित्राः सर्पाः (पृश्नाः), तृणमूलेषु निवसन्तः सर्पाः (उपतृण्याः), पिङ्गलवर्णयुक्ताः सर्पाः (बभ्रः), कृष्णसर्पाः (असिताः) च । ऋषयः

---

६० अ.वे. - १२/४/६-७

६१ तत्रैव - १२/४/८-९

६२ तत्रैव - १२/४/१८

६३ तत्रैव - ५/१३/४

वदन्ति - हे विविधरूपधारिणः सर्पाः ! भवन्तः अस्माकं मित्राणां गृहस्य समीपे न तिष्ठन्तु, एतदन्येषां सर्पाणां कृतेऽपि बोधयन्तु । भवन्तः स्वस्य विषे एव रमणं कुर्वन्तु । यथोच्यते -

**कैरात पृश्न उपतृण्य बभ्र, आ ते शृणुतासिता अलीकाः ।**

**मा मे सख्युः स्तामानमपि, ष्ठाताश्रावयन्तो नि विषे रमध्वम् ॥**[६४]

ये खलु सर्पाः कर्दमभूमिस्थले निवसन्तः कृष्णसर्पाः, पिङ्गलसर्पाश्च, जलाद् दूरे स्थिताः सर्वजितः विषधरसर्पाः तेषां विषनिवारणोपायाः ऋषिभिः ज्ञातचराः आसीत् । अतः तैरुच्यते -

**असितस्य तैमतस्य बभ्रेरपोदकस्य च ।**

**सात्रासाहस्याहं मन्योरव ज्यामिव धन्वनो वि मुञ्चामि रथाँ इव ॥**[६५]

विशालकायोरुगूलावृक्षाज्जातस्य सर्पस्य विषयेऽपि उल्लेखः प्राप्यतेऽत्र । पर्वतसमीपे विचरन्तः, भूखोदनं कृत्वा निवसन्तः सर्पाः अपि उल्लिख्यन्ते । यथा -

**उरुगूलाया दुहिता जाता दास्यसिक्न्या । प्रतङ्कं दद्रुषीणां सर्वासामरसं विषम् ॥**

**कर्णा श्वावित्तदब्रवीद्गिरेरवचरन्तिका । याः काश्चेमाः खनित्रिमास्तासामरसतमं विषम् ॥**[६६]

दशमकाण्डे चतुर्थे सर्पविषनाशनसूक्ते विविधवनस्पत्यौषधीनां नामोल्लेखः क्रियते । विशिष्टौषधिषु "अरंघुषः", "पैद्वम्" इत्यनयोः नामानौ उच्येते । पैद्वौषधं त्रयाणां सर्पाणां विनाशे सहायकं भवति । यथा – "कसर्णीलः", "श्वित्रः", "असितः", "रथर्व्या", "पृदाकुः" इति । यथोच्यते -

**पैद्वो हन्ति कसर्णीलं पैद्वः श्वित्रमुतासितम् । पैद्वो रथर्व्याः शिरः सं बिभेद पृदाक्वाः ॥**[६७]

गृहसमीपे विचरतां दूरवने निवसताञ्च द्विप्रकारकसर्पाणां तथा च वृश्चिकस्य चर्चा क्रियते । यथा -

**अरसास इहाहयो ये अन्ति ये च दूरके । घनेन हन्मि वृश्चिकमहिं दण्डेनागतम् ॥**[६८]

अनेन मन्त्रेण एतत् स्पष्टतया ज्ञायते यत् वैदिककाले वृश्चिकस्य हननं घनेन (Iron Hammar) तथा च सर्पाणां हननं यष्टिना (Stick) क्रियते इति । पैद्वस्य प्रभावेण भयङ्करविषधराः पृदाकुसर्पाः शोकग्रस्ताः भवन्तीत्युच्यते । यथा -

---

६४ अ.वे. - ५/१३/५

६५ तत्रैव - ५/१३/६

६६ तत्रैव - ५/१३/८-९

६७ तत्रैव - १०/४/५

६८ अ.वे. - १०/४/९

**पैद्वस्य मनमहे वयं स्थिरस्य स्थिरधाम्नः । इमे पश्चा पृदाकवः प्रदाध्यत आसते ॥**[६९]

अन्येषु सर्पेषु तिरश्चिराजी, करिक्रतः, श्वित्रः, दर्विः इत्यादयोऽपि ऋषिभिः परिचितपूर्वाः आसन् । तेषां दर्भेषु व्यापादनार्थं प्रार्थना क्रियते । यथा –

**हतास्तिरश्चिराजयो निपिष्टासः पृदाकवः । दर्विं करिक्रतं श्वित्रं दर्भेष्वसितं जहि ॥**[७०]

इन्द्रः एतेषां सर्पाणां नियन्त्रणमकरोदित्युच्यते । यथा -

**इन्द्रो मेऽहिमरन्धयत्पृदाकुं च पृदाकुवम् । स्वजं तिरश्चिराजिं कसर्णीलं दशोनसिम् ॥**[७१]

एवं प्रकारेण जीवानां वर्गीकरणं, जीवानां महत्त्वं, गुणकर्मस्वभावाः अथर्ववेदेऽस्मिन् प्रचुरमात्रया पर्यालोचिताः । अथर्ववेदस्य तृतीयकाण्डे द्विप्रकारकपशूनां (ग्राम्यारण्यानाम्) उल्लेखः अस्ति । यथा -

**वि ग्रम्याः पशव आरण्यैर्व्यापस्तृष्णयासरन् । व्याश्हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥**[७२]

द्वितीयकाण्डे वायव्याः आरण्याः ग्रम्याः इति पशूनां त्रिधा विभागः दृश्यते ।

**ये ग्रम्याः पशवो विश्वरूपा, विरूपाः सन्तो बहुधैकरूपाः ।**
**वायुष्टानग्रे प्र मुमोक्तु देवः, प्रजापतिः प्रजया संरराणः ॥**[७३]

तृतीयकाण्डे सप्तग्राम्यपशूनां नामानि प्राप्यन्ते । यथा उक्तम् -

**इडायास्पदं घृतवत्सरीसृपं, जातवेदः प्रति हव्या गृभाय ।**
**ये ग्रम्याः पशवो विश्वरूपा- स्तेषां सप्तानां मयि रन्तिरस्तु ॥**[७४]

एकादशकाण्डे द्वितीयसूक्ते द्वादशकाण्डे प्रथमसूक्ते च ये मन्त्राः प्रोक्ताः तानि आधारीकृत्य प्रो.त्सिमरमहोदयाः जीवानां पञ्चप्रकारकभेदानां प्रतिपादनं कुर्वन्ति । यथा -

१) सिंहादयः भयंकरवन्यपशवः ।

२) पक्षयुक्ताः हंस -सुपर्ण-शकुनादयः पक्षिणः ।

---

६९ तत्रैव - १०/४/११
७० तत्रैव - १०/४/१३
७१ तत्रैव - १०/४/१७
७२ अ.वे. - ३/३१/३
७३ तत्रैव - २/३४/४
७४ तत्रैव - ३/१०/६

३) जलस्थलनिवासिनः शिशुमार-अजगरादयः ।

४) मत्स्याः पूरीकयः-जष-मत्स्यादयः ।

५) कृमिकीटादयः ।

उच्यते च अथर्ववेदे एतेषां विषये -

**तुभ्यमारण्याः पशवो मृगा वने, हिता हंसाः सुपर्णाः शकुना वयासिं ।**
**तव यक्षं पशुपते अपस्वन्तस्तुभ्यं, क्षरन्ति दिव्या आपो वृधे ॥**

**शिंशुमारा अजगराः पुरीकयाजषा, मत्स्या रजसा योभ्यो अस्यसि ।**
**न ते दूरं न परिष्ठास्ति ते भव सद्यः सर्वान्परि**
**पश्यसि भूमिं पूर्वस्याद्धंस्युत्तरस्मिन्त्समुद्रे ॥**[७५]

तत्रैव एकादशकाण्डे पशूनां ग्राम्यारण्यभेदेन द्विधा विभागः दृश्यते तयोरपि पक्ष्यापक्ष्य-युक्तत्वेन भागद्वयं प्राप्यते । यथा – (१) पार्थिवाः ( जलचराः स्थलचराश्च) (२) दिव्याः ( नभश्चराः) एतेषामपि पशूनां ग्राम्यारण्यभेदेन द्विधा विभागः दृश्यते । तयोरपि पक्ष्यापक्ष्ययुक्तत्वेन भागद्वयं प्राप्यते । यथा -

**पार्थिवा दिव्याः पशव आरण्या ग्राम्याश्च ये । अपक्षाः पक्षिणश्च ये ते जाता ब्रह्मचारिणः ॥**[७६]

शरीरे पादरचनादृष्ट्या पशूनां द्विपात् चतुष्पात् इति द्विधा वर्गीकरणमथर्ववेदस्य द्वितीयकाण्डे संकेतितम् अस्ति । यथा -

**य ईशे पशुपतिः पशूनां, चतुष्पदामुत यो द्विपदाम् ।**
**निष्क्रीतः स यज्ञियं भागमेतु, रायस्पोषा यजमानं सचन्ताम् ॥**[७७]

पशूनां महत्त्वमाधारीकृत्य चतुर्थकाण्डे एकविंशतौ सूक्ते उच्यते तत्र विशिष्टतया सर्वश्रेष्ठपशोः धेनोः ऋषभस्य च महत्त्वमुररीक्रियते । सप्तमकाण्डे पशूनां संवर्धनाय संरक्षणाय च बहुविधाः स्तुतयः प्राप्यन्ते । तृतीयकाण्डे गोशालानां पशुशालानामुल्लेखः क्रियते । पशवः सर्वत्र विचरणं कुर्वन्तु तेषां कृते समीचीनतया तृणादि खाद्यपेयानां व्यवस्था भवतु इति वैदिकमहर्षीणां वचांसि पशुप्रीतिं प्रदर्शयन्ति । नवमकाण्डे सप्तमसूक्ते गवां महत्त्वमाधारीकृत्य षड्विंशतिमन्त्राः प्राप्यन्ते तत्र

७५ अ.वे. ११/२/२४,२५

७६ अ.वे.११/५/२१

७७ अ.वे. २/३४/१

त्रिसप्ततितमे सूक्ते गावः अवध्या इति उच्यन्ते चतुर्दशकाण्डे द्वितीयसूक्ते गवां विशिष्टाः गुणाः प्रतिपादिताः सन्ति । यथा-

**बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । वर्चो गोषु प्रविष्टं यत्तेनेमां सं सृजामसि ॥**

**तेजो गोषु प्रविष्टं यत्तेनेमां सं सृजामसि ॥ भगो गोषु प्रविष्टो यस्तेनेमां सं सृजामसि ॥**

**यशो गोषु प्रविष्टं यत्तेनेमां सं सृजामसि ॥**

**पयो गोषु प्रविष्टं यत्तेनेमां सं सृजामसि ॥**

**रसो गोषु प्रविष्टो यस्तेनेमां सं सृजामसि ॥**[७८]

वर्चस् (कान्तिः), तेजः, भगः ( ऐश्वर्यम्), यशः, पयः (दुग्धं), रशश्चेति षट् गोसम्पत्तयो भवन्ति । अथर्ववेदस्य नवमकाण्डे चतुर्थसूक्ते दिव्यशक्तियुक्तस्य ऋषभस्य महत्त्वमुद्घोष्यते । अयम् ऋषभः पशूनां स्वामी इति कथ्यते । तृतीयकाण्डे सप्तदशसूक्ते "ऋषभः कृषिकार्यार्थम् उपयुज्यते इत्युक्तमस्ति । यथा -

**शुनं सुफाला वि तुदन्तु भूमिं, शुनं कीनाशा नु यन्तु वाहान् ।**
**शुनासीरा हविषा तोशमाना, सुपिप्पला ओषधीः कर्तमस्मै ॥**

**शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम् । शुनं वरत्रा बध्यन्तां शुनमष्ट्रमुदिङ्गय ॥**[७९]

अपरत्र ऋषभस्य अण्डकोशं त्रोटयित्वा नपुंसकीकरणमुच्यते । यथा -

**अश्रेष्माणो अधारयन्तथा तन्मनुना कृतम् । कृणोमि वध्रि विष्कन्धं मुष्कावर्हो गवामिव ॥**[८०]

अत्रैव कर्षफ-विशफभेदेन प्राणिनां भागद्वयमुल्लिख्यते । यथा -

**कर्शफस्य विशफस्य द्यौः पिता पृथिवी माता । यथाभिचक्र देवास्तथाप कृणुता पुनः ॥**[८१]

अथर्ववेदस्य चतुर्थकाण्डे सप्तत्रिंशे सूक्ते मयूरनृत्यस्य उल्लेखः क्रियते । यथा **"आनृत्यः शिखण्डिनः"**[८२९०]। सप्तमकाण्डे षट्पञ्चाशत्तमे सूक्ते मयूरः सर्पाणां विषशोषणं कृत्वा विखण्डनं करोति इति उल्लेखः अस्ति । यथा -

---

७८ अ. वे.१४/२/५३-५८

७९ अ. वे. ३/१७/५,६

८० अ.वे.३/९/१,२

८१ अ.वे.३/९/१

८२ अ.वे. ४/३७/७

**अदन्ति त्वा पिपीलिका वि वृश्चन्ति मयूर्यः । सर्वे भलं ब्रवाथ शार्कोचमरसं विषम् ॥**

अस्मिन्नेव सूक्ते विविधविषधरजीवानां सर्पाणां मूषकाणां वृश्चिकानां सूचना प्रदत्ता अस्ति । तेषु "तिरश्चिराजिः", "असितः", "पृदाकुः", "कङ्कपर्व", "मषकः", "सर्कोटः", "वृश्चिकः" इत्यादयः उल्लेखयोग्या भवन्ति । वृश्चिकस्य पुच्छभागे विषं तिष्ठतीत्यपि उल्लिख्यते ।[८३]

अष्टमकाण्डे चतुर्थसूक्ते उलूकपक्षिणः विषये सूचना लभ्यते अयं पक्षी रात्रौ द्रष्टुं शक्नोति दिवा च भयभीतः जायते उक्तञ्च राक्षस्या साकं तस्या उलूकस्य तुलनां कृत्वा ।[८४]

**प्र या जिगाति खर्गलेव, नक्तमप द्रुहुस्तन्व१ गूहमाना ।**
**वव्रमनन्तमव सा पदीष्ट, ग्रवाणो घ्नन्तु रक्षस उपब्दैः ॥**[८५]

**उलूकयातुं शुशुलूकयातुं, जहि श्वयातुमुत कोकयातुम् ।**
**सुपर्णयातुमुत गयध्रयातुं, दृषदेव प्र मृण रक्ष इन्द्र ॥**[८६]

सप्तमकाण्डे एकचत्वारिंशत्तमे सूक्ते श्येनपक्षी तीर्यग्गतिसम्पन्नः "मृचक्षाः" अवसानदर्शः इति विशेषणाभ्याम् अत्यन्तदूरदर्शी भवतीति सूच्यते । एषः पक्षिविशेषोऽपरान् खगान् आक्रम्य कवलीकरोति इति हेतोः अयं "वयोधाः" इति उच्यते ।[८७] विंशतौ काण्डे उष्ट्रपशुः रथवाहकरूपेण उल्लिखितः अस्ति । तत्र विंशतिसंख्याकाः उष्ट्राः रथवाहनं कुर्वन्तीति परामृष्टोऽस्ति ।[८८] तत्रैव विंशतिकाण्डे त्रिप्रकारकाणामुष्ट्राणां नामानि प्राप्यन्ते । यथा - हिरण्यमिति एकम् अन्यन्नामद्वयं न प्रदत्तम्। इत्थमथर्ववेदे पशुपक्षीणां विषये नैकानि तथ्यानि वर्णितानि सन्ति यानि परवर्तिजन्तु-विज्ञानगवेषणायाः कृते बहुधा सहकुर्वन्ति । इत्यलं विस्तरेण ।

**डॉ.सोमनाथदाशः**
सहायकाचार्यः,
अनुसन्धानप्रकाशनविभागः
राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

८३ अ.वे. ७/५६
८४ अ.वे. ८/४/१७
८५ अ.वे. ८/४/१७
८६ अ. वे. ८/४/२२
८७ अ. वे. ७/४२/२
८८ अ.वे. २०/२२७/२

**सहायकग्रन्थसूची -**


*अमरकोषः*, सम्पा.हरगोविन्दशास्त्री, वाराणसी: चौखाम्बासंस्कृतप्रतिष्ठान,१९९३।

*अथर्ववेदः*, सम्पा.दमोदरसातवलेकरः, वलसाड : स्वध्यायमण्डलः, १८६५।

*वृहदारण्योपनिषद्*, गोरक्षपुर : गीताप्रेस, १९८७।

*शांख्यायनारण्यकम्*, पुणे : आनन्दाश्रम, १९२२।

*ऐतरेयारण्यकम्*, भाष्य. सायण, पुणे : आनन्दाश्रम, १८९८।

*शतपथब्राह्मणम्*, सम्पा.हरिस्वामी, दिल्ली : नागपब्लिशर्स, २००२।

*प्रश्नोपनिषद्*, गोरक्षपुर : गीताप्रेस, १९९८।

*छान्दोग्योपनिषद्*, गोरक्षपुर : गीताप्रेस, १९९४।

*शुक्लयजुर्वेद (माध्यन्दिनसंहिता)*, सम्पा.रामकृष्णशास्त्री, वाराणसी : चौखम्बाविद्याभवन, २०१३।

*ताण्ड्यमहाब्राह्मणम्*, सम्पा.आनन्दचन्दवेदान्तवागीशः, वाराणसी : चौखाम्बासाहित्य, २०१२।

*ऋग्वेदः*, सम्पा. रामगोविन्दशास्त्री, वाराणसी : चौखाम्बाविद्याभवन, २००७।

*तैत्तिरीयसंहिता*, सम्पा., टि.धर्माधिकारी, पुणे : वैदिकसंशोधनमण्डल, १९११।

*अग्निपुराणम्*, सम्पा. हरिनारायण आप्टे, पुणे : आनन्दाश्रम, १९२२।

*भगवद्गीता*, गोरक्षपुर : गीताप्रेस, २००१।

*पद्मपुराणम्*, सम्पा. महादेव आप्टे, पुणे : आनन्दाश्रम, १८९३।

*अष्टादशपुराणपरिचयः*, सम्पा. कृष्णमणित्रिपाठी, वाराणसी : चौखाम्बा सरस्वती भवन,१९८०।

*विष्णुपुराणम्*, अनु.श्रद्धाशुक्ला, दिल्ली : नागप्रकाशनम्, १९९६।

*भट्टाचार्य*, टि.ट. वाचस्पत्यम्, वाराणसी : चौखाम्बाविद्याभवन, १९८३।

अङ्क- ३६
जुलाई - दिसम्बर २०२०

**वेदविद्या**
ISSN-२२३०-८९६२
UGC 'CARE' list Ind. Lang. Sl.No. 97

# महाभारतमहाकाव्ये वेदस्य प्रभावः

**अनामिका दासः**

**प्रस्तावना -**

वैदिकवाङ्मये चतुर्वेदानां स्थानं सर्वोपरि वर्तते। विद्धातुतः निष्पन्नस्य वेदशब्दस्यार्थः ज्ञानम् । 'वेद' इति शब्दः श्रुति-त्रयी-आगम-निगमादिशब्दैरपि बुध्यते । सर्वेषां ज्ञानानामुत्सः वेदः यथा चतुर्धा विभक्तः ऋक्, यजुः, साम, अथर्व तथैव चत्वारस्तरे विस्तारितः – "संहिता, ब्राह्मणम्, आरण्यकम्, उपनिषच्च"[१]। एते वेदाः जगत्याः सर्वेषामपि मानवजातीनां हितसाधनाय प्राचीनाः ग्रन्थाः सन्ति । अत्र धर्म-दर्शन-संस्कृति-सामाजिकजीवनस्य उपयोगिविषयाणां उल्लेखितो अस्ति । **"इष्टप्राप्ति अनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेद"**[२] इति तैत्तिरीयसंहिताभाष्य-भूमिकायामुक्तमस्ति । अपि च प्राप्यते –

**प्रत्यक्षेनानुमित्या वा यस्तूपायो न विद्यते ।**
**एवं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥**[३]

इतोऽपि मन्त्रब्राह्मणयोर्वेदनामधेयम् इति आपस्तम्बेनोक्तम् । संहिता छन्दोबद्धमन्त्रयुक्ता, ब्राह्मणभागो गद्यात्मको यागादिवर्णनपरकः, आरण्यकभागो छन्दोबद्धमन्त्रयुक्तो गाथारुपो या विद्यते । उपनिषद् भागे तत्तत्संहितागतब्रह्मज्ञानादिविषयाणां वर्णनरूपेण सङ्कलनमस्ति ।

संस्कृतसाहित्यजगतः सर्वप्रथमविरचनाः चतुर्वेदाः सन्ति । अतः चतुर्वेदानां प्रभावः परवर्तिसंस्कृतसाहित्यजगति अपि भवति । महाकाव्येऽपि वेदस्य प्रभावो दृश्यते । यद्यपि लौकिकसाहित्यं वैदिकसाहित्यात् पृथको भवति तथापि महाकाव्यस्य प्रारम्भस्य सूत्रपातं प्रचीनात् वैदिकसाहित्यादेव भवतीति विदूषाणां मतम् । वेदानां संवादसूक्तः, आख्यानसूक्तः, दानस्तुतिः, नाराशंसीयाः एव अस्योदाहरणमिति । महाकविवेदव्यासप्रणीतमहाभारतमहाकाव्येऽपि वेदानां प्रभावो बहुलतया परिदृश्यते । महाकाव्यस्य 'पञ्चमवेदः' इति नामकरणमपि वेदैः सह सामञ्जस्यस्योदाहरणमिति वक्तुं शक्यते । महर्षिवेदव्यासकृतं महाभारतमहाकाव्यं पञ्चमवेदरूपेण

१ वैदिक वाङ्मयस्येतिहासः
२ प्रागुक्ते ग्रन्थे
३ प्रागक्तु ग्रन्थे

प्रसिद्धम् । व्यासः सर्वप्रथमः जयाख्यं महाकाव्यमरचयत् । पाण्डवाणां विजयं बोधनार्थं काव्यस्य अस्य नामकरणं जयमभवत् । परन्तु तदा काव्यमिदं सुक्ष्ममैतिहासिकप्रधानं स्यात् । पश्चात् व्यासः स्वशिष्यं वैशम्पायणं यदा महाभारत पाठयति स्म तदा तस्य नाम भारतमेवं ख्यातमासीत् । पुनः सुतदेवेन महाकाव्यस्य अस्य कलेवरं वर्ध्यते । अतः भारतकाव्यं महाभारतं नामाख्यायते । महाभारतस्यार्थं प्रकाशयितुं पण्डिताः एवमुक्तमासन् - "महत्वात् भारत्वात् महाभारतमुच्यते" [४] इति । प्रथमं महाभारतमितिहासः पुराणामाख्यानकञ्चेति नामभिराख्यायते स्म। साम्प्रतिके काले महाभारतमाचारशास्त्रं नीतिशास्त्रं धर्मार्थकाममोक्षाख्य चतुर्वर्गसाधनं चामनन्ति ।

पञ्चमवेदाख्ये महाभारतमहाकाव्ये किदृशं वेदस्य प्रभावः परिदृश्यते तस्यालोचना करणार्थमेव इच्छामः अस्माकमस्मिन् शोधपत्रे । मूलमहाभारतीयकथायां स्थितानां वेदानां प्रभावः विश्लेषणमेव अस्य शोधपत्रस्योद्देश्यम् । तदर्थे एव वयं सर्पयामः।

**महाभारते प्रकाश्यमानः वेदस्य प्रभावः**

अत्र वेदः इत्युक्ते न केवलं मन्त्रभागः अपि तु संहिता-ब्राह्मण आरण्यक-उपनिषद् श्चेति चत्वारस्तराः बुध्यन्ते। अतः महाभारतमहाकाव्ये प्रकाशितस्य संहिता-ब्राह्मण-आरण्यक-उपनिषदि प्रभावस्य वर्णनमस्मिन् शोधपत्रे उपस्थाप्यते ।

महाभारतं न केवलं महाकाव्यमपि तु धर्मशास्त्रार्थशास्त्रकामशास्त्रदर्शन-ग्रन्थरुपेणोपस्थापयति महाकाव्यकारः वेदव्यासः स्वयमेव[५] । यदि महाभारतस्य धर्मीयदिशं वयं गृह्णीमः तर्हि तत्र वेदस्य प्रभावः स्पष्टतया उपलभ्यन्ते । यतो हि "वेदोऽखिलो धर्ममूलमिति"[६] मानवमतम् । संहितानुसारेण धर्मः इत्येतत्पदं धार्मिकविधिः यथा व्रतम्, आचारः इत्येषु अर्थेषु प्रयुक्तोऽस्ति । महाभारतमहाकाव्ये संहितानुसारितः धर्मस्य विस्तारः बाहुल्येन दृश्यते । महाभारतस्य पत्रेषु वैदिकरित्यानुसारितः कृतः कर्म विराजमानः। महाभारतमहाकाव्यस्यादिपर्वणः त्रयोदशाधिक-शततमाध्याये महाकाव्यकारः अश्वमेधयज्ञस्य विषये उल्लेखयति । तत्र धृतराष्ट्रेण पाण्डोः पराक्रमेण कृतस्याश्वमेघस्य विषये वर्णयति वेदव्यासः।[७] पुनश्च पाण्डुमाद्रयोः मरणपश्चात् तयोः अन्त्येष्टिक्रिडाया- समये वेदोक्तेः पद्धतेः व्यवहारः दृश्यते यथा -

---

४ महाभारतम्-आदि 1/13

५ धर्मे चार्ये च कामे च मोक्षे च भारतर्षभ ।
यदि हास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित् ॥ इति ॥ ( महाभारतम् 1-2-21)

६ संस्कृत साहित्येतिहासः

७ तस्य वीरस्य विक्रान्तैः सहस्रशतदक्षिणैः ।
अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः ॥ इति ॥ (महाभारतम् 1-113-5)

**हयमेधाग्निना सर्वे याजकाः सपुरोहिताः ।**
**वेदोक्तेन विधानेन क्रियाश्चक्रुः समन्त्रकम् ॥ इति ॥**[८]

महाकाव्यस्य सभापर्वणि राजसूययज्ञस्य विषयं संप्राप्यते । तत्र युधिष्ठिरस्य राजसूययज्ञसम्पादनस्य विषयः वर्ण्यते महाकाव्यकारेण[९] ।

महाभारतस्य वनपर्वणि यदा पाण्डवाः काम्यकवने निवासस्य दृढनिच्छय कुर्वन्ति तदा काम्यकवनस्य वर्णनावसरे वने ब्राह्मणैः उच्चारितैः वेदमन्त्रध्वनेः विषये समुपलभ्यते । तत्र काम्यकवनं वेदमन्त्रस्य ध्वनिना ब्रह्मलोकवत् प्रतिभाति इति महाकाव्यकारस्य मतम्[१०] । पुनश्च तं वेदमन्त्रस्य ध्वनिं व्यासदेवः पाण्डवानां ज्याघोषेण सह तुल्यति । तं तु सः ब्रह्मक्षत्रशक्तयोः संयोगः इत्युच्यते[११] । वयमिदं वैदिकलौकिकसाहित्ययोः सङ्करः एवमपि वक्तुं शक्यते।

महाभारतमहाकाव्ये विविधस्थानेषु क्षमा-दयेत्यादिनां गुणानां विषये संप्राप्यन्ते । महाकाव्ये क्षमागुणस्य श्रेष्ठतायाः विषये वर्णयित्वा महाकाव्यकारः कथयति यत् -

**क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमाश्रुतम् ।**
**य एतदेवं जानाति स सर्वं क्षन्तुमर्हति ॥ इति ॥**[१२]

तदेव ऋग्वेदे तथा अथर्ववेदे अपि प्राप्यते[१३]। पुनश्च दानधर्मस्य सन्दर्भे अपि महाभारतस्य तथा वेदस्य सामञ्जस्यं दृश्यते । ऋग्वेदस्य दशममण्डले दानधर्मस्य विषये सम्प्राप्यते । महाभारते अपि विविधस्थानेषु दानधर्मस्य विषये प्राप्यते । तत्र दानीगुणस्य कारणादेव अङ्गराजकर्णः दातारूपेण प्रख्यातो जातः ।

महाभारतमहाकाव्ये वर्णितसमाजव्यवस्थायां वयं महाभारतीयसमाजव्यवस्थेत्येवं वक्तुं शक्नुवन्ति । तत्र महाभारतीयसमाजव्यवस्थायाः तथा वैदिकसमाजव्यवस्थायाः साम्यं बाहुल्येन दृश्यते । महाभारतमहाकाव्ये वर्णितशिक्षाव्यवस्था वैदिकसमाजस्य शिक्षाव्यवस्थया समनन्तरमेव

---

८ प्रागुक्ते ग्रन्थे (1-126-22)

९ स राजसूयं राजेनेद्र कुरुणामृषभस्तदा ।
आहर्तं प्रवणं चक्रे मनः संचिन्त्य चासकृत ॥ इति॥ (प्रागुक्ते ग्रन्थे 2-13-5)

१० ईर्यमानेन सततं ब्रह्मघोषेण सर्वशः ।
ब्रह्मलोकसमं पुण्यमासीद् द्वैतवनं सरः ॥ ( प्रागुक्ते ग्रन्थे 3-3-10)

११ ज्याघोषश्चैव पार्थानां ब्रह्मघोषश्च धीमताम् ।
संसृष्टं ब्रह्मणा क्षत्रं भूय एव व्यरोचत ॥ इति ॥ (प्रागुक्ते ग्रन्थे 3-3-11)

१२ महाभारतम् (3-4-28)

१३ अमर्त्याः पृथिवि गन्धमग्रे तेन मा सुरिभि कृणु मा नो द्विक्षत कश्चन् -
यस्ते गन्धः पुरुषषु स्त्रीषु पुंसु भगो रुचिः । यो अश्वेषु वीरेषु यो मृगेषु हस्तिषु । (अथर्ववेद 12-1-24)

वक्तुं शक्यते। वैदिकसमाजे गुरुकुलव्यवस्थया शिक्षाग्रहणस्य प्रथायाः प्रचलनमासीत् । तत्र ब्राह्मणक्षत्रियवैश्यानां कृते शिक्षाव्यवस्था व्यवस्थिता आसीत् । शिष्यः उपनयनसंस्कारस्य पश्चादेव गुरुगृहं गत्वा अरण्यं गत्वा वा शिक्षाग्रहणमकरोत् । उपनयनसंस्कारात् द्विजत्वः प्राप्तः शिष्यः एव ब्रह्मचर्याश्रमे प्रवेशं कृत्वा शिक्षाजीवनस्य प्रारम्भरं करोति। तत्र विविधशास्त्राणामध्यनं भवेयु । निरन्तरः वेदाः तथा अन्यान्यग्रन्थानामध्यनमवश्यमेवं भवति । यं ब्रह्मयज्ञः इति उच्यते। अतः छात्राणां कृते ब्रह्मयज्ञनिरुपणः अवश्यम्भावि इति प्रतीतं भवति । वैदिकसाहित्सस्य छात्राणामुदाहरणस्वरूपेण ब्राह्मणोपनिषदि बहु छात्राणां विषये प्राप्यन्ते यथा- आरुणि, भृगु, श्वेतकेतु, नचिकेता, सत्यकामः, शौनकः इत्यादयः। महाभारतीयसमाजे अपि गुरुकुलसमाज-व्यवस्थायाः प्रचलनं दृश्यते । आदिपर्वणि द्रौपदद्रोणाचार्ययोः विषययोः वर्णनावसरे महर्षिभरद्वाजस्याश्रमे द्वयोः शिक्षाग्रहणस्य विषयः संप्राप्यते[१४]। महाभारतीयशिक्षाव्यवस्था वैदिकशिक्षाव्यवस्थयाधिकः विशालः परिशरात्मकः इति प्रतिभाति । तत्र शास्त्राध्ययनस्योपरि शस्त्रस्याध्ययनमत्यावश्यकियं भवति । तत्र वेदपाठस्योपरि धनुर्विद्या तथा विविधशस्त्रविद्यानां प्रचलनमपि आसीत्[१५] । इत्थं वैदिकशिक्षाव्यवस्थया सह महाभारतीय-शिक्षाव्यवस्थायाः सम्मेलनं दृश्यते ।

महाभारतमहाकाव्ये उपनिषदि प्रभावः स्पष्टतया दृश्यते । महाकाव्यस्य भीष्मपर्वणि उपलब्धः श्रीमद्भगवतगीता प्रस्थानत्रयीषु अन्यतमो भवति । गीतां गीतोपनिषद् इत्येवमपि बुधाः उच्यन्ते । गीतायां श्रीकृष्णः निष्कामकर्मणः विषये उल्लेखयति[१६] । तथैव कठोपनिषदि अपि निष्कामकर्मणः श्रेष्ठतायाः विषयः संप्राप्यते[१७] । गीतायां उपनिषद्वत् आत्मायाः अविनश्वरत्वस्य विषयं प्राप्यते[१८] । एवं प्रकारेण महाकाव्यस्य विविधक्षेत्रे उपनिषदः प्रभावः परिलक्षते ।

महाभारतमहाकाव्यस्य पठनस्थानमासीदरण्यम् । व्यासविरचितं महाभारतं सुतदेवः अरण्ये स्वशिष्यं शौनकं पाठयति स्म । अतः अरण्ये पठनत्वात् महाभारतस्य साम्यं आरण्यकेन सह भवति

---

१४ सनित्यमाश्रमं गत्वा द्रोणेन सहपार्थिवः ।
चिक्रीडध्ययनं चैव चकार क्षत्रियर्षभः ॥ इति ॥ ( महाभारतम् 1-14-7)

१५ तथेत्युक्त्वा ततस्तस्मै प्रदादस्त्राणि भर्गवः।
सरहस्यव्रतं चैव धनुर्वेदमशेषतः ॥ इति । ( प्रागुक्ते ग्रन्थे 1-14-18)

१६ कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भुर्मा ते सङ्गोऽस्त्वकर्मणि ॥ इति । (प्रामुक्ते राधे 6-3-57)

१७ जानाम्यहं शेवधिरित्यनित्यं न ह्यध्रुवै प्राप्यते हि ध्रुवं तत् ।
ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्व्यैः प्राप्तवानस्मि नित्यम् ॥ इति ॥ ( कठोपनिषद् 2-10)

१८ न जाते मिळते वा कदाचितन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ इति ॥ ( महाभारतम् 6-3-46)

इति वक्तुं शक्यते । यतो हि आरण्यकमपि अरण्ये पाठितं भवति[१९] । इत्थं महाकाव्यस्यास्य आरण्यकेन सह साम्यं दृश्यते ।

**आलोचनानिष्कर्षः**

पौराणिकं समालम्व्य एव आधुनिकस्य निर्माणं भवति । महाभारतमहाकाव्यमेतत् वाक्यं सम्पूर्णतया सफलं करोति । पौराणिकवैदिकसाहित्यमवलम्व्य परवर्तीकाले विरचितः महाभारतमहाकाव्यं सुधीसमाजे विशेषतया समादृताः । वेदस्य ज्ञानार्जनार्थमेव महाभारतस्य प्रयोजनमस्तीति महाकाव्यकारस्य स्वस्य मतम्[२०] । अतः महाभारतमहाकाव्ये वेदस्य प्रभावः विविधदिक्षु आयाति । वैदिकसाहित्ये व्यवहृताः बहु उपदेशाः, यथा – "सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । मातृदेवो भवः । पितृदेवो भवः। आचार्यदेवो भवः ।[२१] इति, महाकाव्यकारः महाभारते प्रायः बहुक्षेत्रे उपदेशवाणीरूपेण व्यवहारं करोति । मुलतः सम्पूर्णे महाभारतमहाकाव्ये वेदस्य प्रभावः स्पष्टतया दृश्यते इति अलं विस्तरेण ।

**अनामिका दास**

सहकारी अध्यापिका हातिधुरा महाविद्यालय, धुबुरि

तथा

**ज्ञानश्री देवी**

शोधछात्रा, संस्कृतविभागः असमविश्वविद्यालयः, शिलचर

---

१९ अरण्याध्ययनादेतद् आरण्यकमितीर्यते ।
अरण्ये तदधीयेतेत्येवं वाक्यं प्रचक्षते ॥ इति । (संस्कृतसाहित्येतिहासः)

२० इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद् वेदो मामय प्रहरिष्यति ॥ ( महाभारतम् 1-1-14)

२१ तैत्तिरीयोपनिषद्

**सहायकग्रन्थसूची**

*अथर्ववेदसंहिता*, चौखम्बा संस्कृतप्रतिस्थान, दिल्ली, १९९०

*ईशादि नौ उपनिषद्*, हरिकृष्णदास गोयन्दका (व्याख्याकारः), गीताप्रेस, गोरखपुर,१९९७

*नवीनवैदिकसञ्चयनम्*, चौखम्बा कृष्णदास अकादमी, वाराणसी, २००५

*महाभारतम्*, स्वामी जगदीश्वरानन्द सरस्वती (व्याख्याकारः), विजयकुमार गोविन्दराम हासानन्द (प्रकाशकः), दिल्ली, २०१२

दाहाल लोकमणि, *संस्कृतसाहित्येतिहासः*, चौखम्बा कृष्णदास अकादमी, वाराणसी, २०११

मिश्र जगदीशचन्द्र, *वैदिकवाङ्मयस्येतिहासः*, चौखम्बा सुरभारती प्रकाशन, वाराणसी, २००६

*Ten Principal Upanishads*, Motilal Banarsi Das (Publisher), New Delhi. 2005

**চুতীয়া, বিপিন, অসমীয়াত সমগ্ৰ চাৰি বেদৰ ইতিবৃত্ত, কিৰণ প্ৰকাশন ধেমাজী**

**বসু, যোগীৰাজ, বেদৰ পৰিচয়, অসম প্ৰকাশন পৰিসদ, গুয়াহাটি,** ২০০৪